सोऽथो भूभृल्ललोकोऽभूल्लोकसुरनायकः। यो यशःश्रद्धया शुद्धं व्यधाद्ब्रह्माण्डमण्डलं।
यस्य दिव्यप्रभावस्य कथाः श्रुतिपथं गताः। आश्चर्य्याश्चर्य्यतां यान्ति नियतं सुधियामपि।
कोटिवेधिनि सिद्धे हि सरसे शाटकार्पणैः। आसीत् सुचिरतां कर्त्तुं हेमाण्डस्य ध्रुवं क्षमः।
संस्तम्भ्याम्भःप्रविष्टेन तेन नागसरोऽन्तरं। तारुण्यं फणिकन्यानां निन्ये संभोगभव्यतां।
तत्कालप्रबलप्रेक्षबौद्धवादिसमूहजित्। अवधूतोऽभवत् सिद्धस्तस्य ज्ञानोपदेशकृत्।
विजयेश्वरनन्दीशक्षेत्रज्येष्ठेशपूजने। तस्य सत्यगिरो राज्ञः प्रतिज्ञा सर्व्वदाऽभवत्।
ग्रामे ग्रामे स्थितैरश्वैर्धावनं प्रतिषिद्धवान्। खेनावहत्तं सततं नागः कोऽपि सुहृत्तया।
स रुद्धवसुधान् म्लेच्छान्निर्व्वासयितुमूर्ज्जविक्रमः। जिगाय जैत्रयात्राभिर्महीमर्णवमेखलां।
स तत्रोज्झटितस्तेन म्लेच्छाच्छादितमण्डलः। स्थानमुज्झटडिम्बाख्यं जनैरद्यापि गद्यते।
जित्वोर्व्वीं कन्यकुब्जाद्यां तत्रत्यं स न्यवेशयत्। चातुर्व्वर्ण्यं निजे देशे धर्म्यांश्च व्यवहारिणः।
यथावद्वृद्धिमप्राप्तं व्यवहारधनादिभिः। सामान्यदेशवद्राज्यं तावदस्मिन् हि मण्डले।
धर्म्माध्यक्षो धनाध्यक्षः कोषाध्यक्षश्चमूपतिः। दूतः पुरोधा दैवज्ञः सप्त प्रकृतयोऽभवन्।
॥ युगलकं ॥ कर्म्मस्थानानि धर्म्याणि तेनाष्टादश कुर्व्वता। ततः प्रभृति भूपेन कृता यौधिष्ठिरी स्थितिः।
स विक्रमप्रभावाभ्यां समुपार्ज्जितया श्रिया। विदधे वारवालादीनग्रहारानुदग्रधीः।
द्वारादिषु प्रदेशेषु प्रभावोद्दामशुद्धया। ईशानदेव्या तत्पत्न्या मातृचक्राणि चक्रिरे।
श्रुतनन्दिपुराणः स व्यासाक्षेवासिनो नृपः। सेवनं सोदरादीनां नन्दीशस्पर्द्धया व्यधात्।
प्रतिष्ठां ज्येष्ठरुद्रस्य श्रीनगर्य्यां वितन्वता। तेन नन्दीशसंस्पर्द्धा न मेने सोदरं विना।
विस्मारितो नित्यकृत्यं कार्य्यव्यग्रतयैकदा। विदूरसोदरजलाप्लावनालाभदुर्म्मनाः।
अपश्यन्निर्ज्जलात् स्थानादकस्मादुत्थितं पयः। स सोदराविसम्वादि वर्णस्वादादिभिर्गुणैः।
॥ युग्मं ॥ प्रादुर्भूते ततस्तस्मिंस्तीर्थे कृतनिमज्जनः। स नन्दिरुद्रस्पर्द्धायां मानी पर्य्यासमासदत्।
तेन जातु परीक्षार्थं निक्षिप्तः सोदराम्भसि। सपिधानाननः स्वर्णभृङ्गारः सुषिरोदरः।
दिनद्वयेन सार्द्धेन श्रीनगर्य्युद्भवाश्मसः। उन्मग्नः स महीभर्त्तुस्तस्य चिच्छेद संशयं।
नूनं नन्दीश एवासौ भोक्तुं भोगानवातरत्। दृष्टादृष्टक्रियासिद्धिर्न भवेत्तादृगन्यथा।
राज्ञस्तस्य कदाचित्तु व्रजतो विजयेश्वरं। ययाचे काचिदबला भोजनं मार्गमध्यगा।
यथेष्टमशनं दातुं ततोऽनेन प्रतिश्रुते। व्यक्तणोद्विकृता भूत्वा सा नृमांसाशने स्पृहां।
स सत्त्वहिंसाविरतस्तस्यै दातुं स्वविग्रहात्। अनुज्ञां प्रददौ भोक्तुं यदा सैवं तदाब्रवीत्।
बोधिसत्त्वोऽसि भूपाल कोऽपि सत्त्वोर्ज्जितव्रतः। कारुण्यं प्राणिषु दृढं यस्येदृक्त्वं महात्मनः।
बौद्धभाषामजानानो माहेश्वरतया नृपः। को बोधिसत्त्वो यं भद्रे मां वेत्सीति जगाद तां।
पुनर्ब्बभाषे सा भूपं श्रोतव्यं मत्प्रयोजनं। अहन्त्याधिता बौद्धैः क्रोधाद्विप्रकृतैस्त्वया।
लोकालोकाद्रिपार्श्वस्थास्तामस्याः कृत्तिका वयं। बोधिसत्त्वैकशरणाः कारुण्यस्ततमसः स्वयं।

सदाचारोऽपि स नृपः प्रजाभाग्यविपर्य्ययैः। व्यधाद्विषयदोषेण महानर्थपरम्परां।
विहारे निवसन्नेककिन्नरग्रामवर्त्तिनि। तस्य योगबलात् कोऽपि श्रमणोऽपाहरत् प्रियां।
विहाराणां सहस्राणि तत्कोपाग्निरदीदहत् सः। प्रतिपद्य च तद्ग्रामान् द्विजेभ्यो मध्यमठाश्रये:। २००
चत्वरापणं राजपथैर्नीयमानोज्ज्वलनिम्नगं। स्फीतपुण्यफलोद्यानं स्वर्गस्येवाभिधान्तरं।
दिग्जयोपार्ज्जितैर्व्वित्तैर्ज्जितविश्वमपत्तनं। वितस्तापुलिने तेन नगरं निरमीयत।
॥ युगलकं ॥ तत्रैकस्मिन् किलोद्याने स्वच्छस्वादुजलाश्रितः। आसीत् सुश्रवसो नाम्नो नागस्य वसतिः सरः।
कदाचित्तस्य दूराध्वक्लान्तो मध्यदिने युवा। छायार्थी तत् सरःकच्छं विशाखाख्योऽविशद्द्विजः।
स च्छायपादपतले समीरैः शमितक्रमः। शनैर्जलमुपस्पृश्य भोक्तुं सक्तून् प्रचक्रमे। २०५
तान् पाणौ ग्रहीतैवाथ तेन तीरविहारिभिः। पूर्व्वमाकर्णितो हंसैः शुश्रुवे नूपुरध्वनिः।
निर्गते सत्वरं कुञ्जादपश्यत् पुरतस्ततः। कन्ये नीलनिचोलिन्यौ स केलिचलल्लोचने।
कर्णिकापद्मरागांशुजालक्रीडायितस्मिता। मनोज्ञधवलापाङ्गे तनीयोऽञ्जनरेखया।
हारिणीसाद्भुतैर्मन्दमारुतान्दोलनाकुलैः। समाधानयुगे रूपपताकापल्लवैरिव।
॥ तिलकं ॥ ते शशाङ्काननै दृष्ट्वा शनैरभ्यर्णमागते। विरराम स्मरस्मारात् मुहुर्मौग्ध्यजडीकृतः। २१०
भक्षणे कच्छगुच्छानां शिम्बीरम्बुजलोचने। ते पुनर्द्दृष्टवानग्रे किञ्चिल्लज्जापाविनिर्गतः।
आकृतेरस्य धिगीदृश्या भोज्यमेतदिति द्विजः। ध्यायन् कृपार्द्रः सम्मान्य स ते सक्तूनभोजयत्।
उपनिन्ये च सक्तूश्च पुटकैश्चाटुसीत्कृतैः। तयोः पानाय पानीयं सरसः स्वच्छशीतलं।
आचान्ते शुचितां प्राप्ते कृतासनपरिग्रहे। ततश्च वीजयन् पर्णतालवृन्तैरभाषत।
भवत्यौ पूर्व्वसुकृतैः कैश्चित् सम्प्राप्तदर्शनः। चापलादिप्रसङ्गात् प्रष्टुमिच्छत्ययं जनः। २१५
कल्याणिनीभ्यां कतमा पुण्या जातिः परिष्कृता। कुत्र वा कान्तमेतादृग्विरसं येन भुज्यते।
एका तमूचे विद्धावामत्र सुश्रवसः सुते। स्वादुभोज्यमप्राप्य किमीदृक्षोपभुज्यते।
पित्रा विद्याधरेन्द्राय प्रदातुं परिकल्पिता। इरावत्यहमेषा मे चन्द्रलेखा यवीयसी।
पुनर्द्विजोऽभ्यधादेवं नैश्चिन्त्यं किमस्ति वः। ताभ्यामवादि तातोऽत्र हेतुर्वेत्ति स पृच्छ्यतां।
ज्येष्ठेऽत्र कृष्णपक्षे द्रष्टा यात्रार्थी तक्षकस्य तं। आगतं बुद्ध्या नीलनन्दिन्या शास्यसि ध्रुवं। २२०
द्रक्ष्यस्यावामपि तदा तदभ्यर्णकृतस्थिती। इत्युक्त्वा फणिकन्ये ते क्षणाद्दांक्षा तिरोहिते।
क्रमात् प्रवृत्ते सोऽथ नटचारणसङ्कुलः। प्रेक्षिलोकसमाकीर्णस्तत्र यात्रामहोत्सवः।
द्विजोऽपि कौतुकाकृष्टः पर्य्यटन् रङ्गमण्डपं। कन्योक्तचिह्नज्ञातञ्च नागं कान्तिकमाययौ।
पार्श्वस्थिताभ्यां कन्याभ्यां पूर्व्वमावेदितोऽथ सः। द्विजन्मने व्याजहार स्वागतं नागनायकः।
ततः कथान्तरे क्वापि पृष्टः कारणमापदां। जगाद तं द्विजन्मानं निःश्वस्य श्वसनाशनः। २२५
अभिमानवतां जन्तुर्न्युकार्युक्तविवेकिनां। युज्यते वक्तुमोग्यानां दुःखानामप्रकाशनं।
परदुःखसमाकर्ण्य स्वभावसुजनो जनः। उपकारासमर्थत्वात् प्राप्नोति हृदयव्यथां।

हन्ति स्वां बत मन्यते यदि गुरुं धर्मेऽनुकम्पोक्तिभिर्व्यर्थं निन्दति योग्यतां मितमतिः कुर्वन् स्तुतीरात्मनः ।
गर्भोपायनिषेवणं कथयति स्वाकुं वदन् व्यापदं मुक्ता दुःखमहन्तुदां वितनुते पीडां जनः प्राकृतः ।
अतएव विवक्रणां यावदायुस्त्वमानवे । दीर्घाणि सुखदुःखानि दहत्यन्ते चितानलः ।
कः स्वभावगभोगाणां लङ्घयेद्दुहिरापदं । वालापत्येन भर्त्रेन यदि मा न मकाश्यते ।
तदस्मिन्नेतयोर्व्याख्यादस्तुनि व्यक्तिमागते । तवाये गोपनं साधो न ममाप्युपपद्यते ।
स्वयाप्यस्मद्धितार्थाय निसर्गसरलात्मना । दैवप्रयासः कल्याणिन् क्रियतां यदि शक्यते ।
योऽयं तरुतले मुण्डचूडालो दृश्यते व्रती । अमुना क्षत्रपालेन कान्दिशीकाः कृता वयं ।
अभुक्ते मान्त्रिकैरस्मै नवे नागैर्न भुज्यते । अयं नास्ति च तनेन समयेन हता वयं ।
क्षेत्राणि रत्नवेतस्मिन् दृष्ट्वापि फलसम्पदं । भोक्तुं नैव समर्थाः स्मः प्रेतादव सरिज्जलं ।
तथा कुरु यथा भ्रश्येत समयादेष नैष्ठिकः । योग्या प्रतिक्रियां विप्रो वयमप्युपकर्त्तृषु ।
स तथेति ततो नागमुक्तो यत्नपरो द्विजः । अचिन्तयद्दिवारात्रौ क्षत्रपालस्य वञ्चनां ।
गूढं तस्य वहिःक्षेत्रकुटीगर्भकृतस्थितेः । पच्यमानान्नभाण्डान्तर्नवान्नं न्यक्षिपत्ततः ।
भुञ्जान एव तत्तस्मिन् क्षणादेव जहार सः । महीन्द्रः करकासारवर्षी स्फीतां फलश्रियं ।
तस्य व्युत्क्रान्तदारिद्र्यः सर्वोऽभ्यर्णमागतं । कृतोपकारमन्येद्युर्निजोर्वीमनयद्द्विजं ।
तत्र पितुरादेशात् कन्याभ्यो विहितार्हणः । अमर्त्यैर्नूतभैर्भोगैरतोष्यत दिने दिने ।
कालेन सर्व्वनामस्य स्वां भुवं गन्तुमुद्यतः । प्रतिश्रुतं वरं नागं चन्द्रलेखामयाचत ।
समन्ध्यायोग्यमपि तं कृतज्ञत्वप्रमोदः । संविभेजे स भुजगः कन्यया च धनेन च ।
एवं नागवरावाप्तश्रियस्तस्य द्विजन्मनः । महानगरपुरे कालस्तेनैनिर्योत्सवैर्ययौ ।
भुजगेन्द्रतनूजापि तं पतिं पतिदेवता । अतोषयत् परार्ध्यश्रीशीलाचारादिभिर्गुणैः ।
तस्यां कदाचित् सौधाग्रस्थितायां प्राङ्गणाद्वहिः । आतपायोऽभिद्रुतं धान्यं बुभुजे विहरन् हयः ।
तं वारयितुमाकृता भृत्या नासन् गृहे यदा । शिञ्जानमञ्जुमञ्जीरा सा तदावातरत् स्वयं ।
एकहस्तधृतावेगलस्तनीवीसुकाम्बया । तया पाणिसरोजेन धावित्वा सोऽथ ताडितः ।
भोज्यमुत्सृज्य यातस्य फणिस्त्रीस्पर्शतस्ततः । सौवर्णीं पाणिमुद्राङ्कां तुरगस्योदपद्यत ।
तस्मिन् काले नरो राजा चारैस्तां चारुलोचनां । श्रुत्वा द्विजवधूं तस्या प्रागेवाङ्कुरितस्मरः ।
तस्य धावन्तमुत्पन्नमन्तःकरणवारणं । बलान्नियमितुं नाशकदपवादभयाङ्कुशः ।
तस्मिन्नुद्बुद्धरागाग्नि विश्वे भूपतेः पुनः । उवाह हयहस्ताङ्को धूमवातानुकारितां ।
चक्रे पर्यस्तमर्यादः सरलाङ्गुलिशोभिना । सकाश्चनकराङ्केन शशाङ्केनेव वारिधिः ।
श्रीडानिगडनिर्मुक्तो दूतैराकृतमर्मभिः । तामुपच्छन्दयन् सोऽथ सुन्दरीमुदवेजयत् ।
सर्व्वोपायैरसाध्यासु विप्रस्त्यपतिरप्यसौ । तेनायाच्यत लुब्धेन रागान्धानां कुतस्त्रपा ।
अथ निर्भर्त्सितो तस्मादपि मायत्नामकृत् । हठेन हर्तुं तां राज्ञा समादिश्यन्त सैनिकाः ।

उत्पलाक्ष इति ख्यातिं येनैकान्तनया गतः । स त्रिंशतं सार्द्धान् वर्षाणामन्वशान्महीं ।
तस्य सूनुर्हिरण्याक्षः स्वनामाङ्कं पुरं व्यधात् । क्ष्मां सप्तत्रिंशतं वर्षान् सप्त मासांश्च भुक्तवान् ।
हिरण्यकुल इत्यस्य हिरण्याक्षस्य चात्मजः । षष्टिं षष्टिं च मुकुलस्तत्सूनुरभवत् समाः । २९०
अथ म्लेच्छगणाकीर्णे मण्डले चण्डचेष्टितः । तस्यात्मजोऽभून्मिहिरकुलः कालोपमो नृपः ।
दक्षिणां सान्तकामाशां स्पर्द्धया जेतुमुद्यता । अभिषादुत्तरहरिद्भाराज्यमिवान्तकं ।
याखिथं यस्य सैन्यान्तर्वर्त्यमानाञ्जनोत्सुकान् । अजानन् गृध्रकाकादीन् दृष्ट्वाग्रे धावतो जनाः ।
दिवारात्रं हतप्राणिसहस्रपरिवारितः । योऽभूद्भूपालवेतालो विलासभवनेष्वपि ।
बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवं । न बभूव नृशंसस्य यस्य घोराकृतेर्जितः । २९५
स जातु देवीं सम्बीतसिंहलांशुककञ्चुकां । हेमपादाङ्कितकुचां दृष्ट्वा जज्वाल मन्युना ।
सिंहलेषु नरेन्द्राङ्घ्रिमुद्राङ्कः क्रियते पटः । इति कञ्चुकिना पृष्टेनोक्तो यात्रामधात्ततः ।
तत्सेनाकुम्भिदानाम्भोनिम्नगाकृतसङ्गमः । यमुनालिङ्गनप्रीतिं प्रपेदे दक्षिणार्णवः ।
स सिंहलेन्द्रेण समं संरम्भादुदपाटयत् । चिरेण चरणस्पृष्टप्रियालोकनजां रुषं ।
दूरात्तत्सैन्यमालोक्य लङ्कासौधैर्निशाचराः । भूयोऽपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे । ३००
स तत्रान्यं नृपं दत्त्वा तीव्रशक्तिरुपाहरत् । पटं यमुषदेवाख्यं मार्तण्डप्रतिमाङ्कितं ।
व्यावृत्य चोलकर्णाटलाटादींश्च नरेश्वरान् । सिन्धुरानिव गन्धेभो गन्धेनैव व्यधारयत् ।
तस्मिन् प्रयाते प्राग्भ्यः ध्वंसस्त्यपराभवं । नगर्यो सरणाघ्रस्तस्म्यदट्टालमेखलाः ।
काश्मीरं द्वारमासाद्य स्वभ्रभ्रष्टस्य दन्तिनः । श्रुत्वा सत्रासजं रावं तोषरोमाञ्चितोऽभवत् ।
तदाकर्णनसंरम्भे सहर्षोऽथ विरुद्धधीः । शतमन्यद्गजेन्द्राणां घटेन निरलोठयत् । ३०५
स्पर्शोऽङ्गानि यथा वार्थं कीर्त्तनं पापिनां तथा । सन्दूषयेदतो नोक्ता तस्यान्यापि नृशंसता ।
कोऽवेत्त्यद्भुतचेष्टानां कार्यं प्राकृतचेतसां । धर्म्यं सुकृतसम्प्राप्तिहेतोः सोऽपि यदाददे ।
श्रीनगर्यां हि दुर्बुद्धिर्विदधे मिहिरेश्वरं । होलाडायां समिहिरपुराख्यं पृथुपत्तनं ।
अग्रहारान् जगृहिरे गान्धारब्राह्मणास्ततः । समानशीलास्तस्यैव ध्रुवं तेऽपि द्विजाधमाः ।
भगिनीवर्गसम्भोगनिर्लज्जाम्लेच्छवंशजाः । स्नुषासङ्गतिसक्ताश्च दारदाः सन्ति पापिनः । ३१०
वस्तुभावैस्तथा भाट्टा भार्याविक्रयकारिणः । परोपभोगितास्तेषां निर्लज्जाकारि योषितः ।
मेघागमः फणिभुजं प्रथितान्धकारः प्रीणाति हंसममलो जलदात्ययश्च ।
प्रीतेः समानरुचितैव भवेन्निदानं दातुः प्रतिग्रहकृतश्च परस्परस्य ।
स वर्षसप्ततिं भुक्त्वा भुवं भूलोकभैरवः । भूरिरोगार्दितवपुः प्राविशज्जातवेदसं ।
सोऽयं त्रिकोटिहा भुक्तो यः स्वात्मन्यपि निर्घृणः । दैवत्यागेऽस्य गगनादुच्चचारेति भारती । ३१५
इत्यूचुर्ये मते तेषां स एव परिहारदः । क्षुद्रजन्तीतघृतामयचारादिकर्मभिः ।
आक्रान्ते दारदैर्भौट्टैर्म्लेच्छैरशुचिकर्मभिः । विनष्टधर्मे देशेऽस्मिन् पुण्याचारप्रवर्त्तनं ।

अन्योऽव्यानीय देशेभ्यः पुण्येभ्यो वसिकादिषु । पाकशालयदारेषु ब्राह्मणान् स न्यरोपयत् ।
उत्तमो लोकपालोऽयमिति लब्ध प्रशस्तिषु । यः प्राप्तवान् विना यज्ञं चक्रमे न पशुवधं ।
सपञ्चदिशां वर्षषष्टिं पालयित्वा स मेदिनीं । भोक्तुं पुण्यपरीपाकं लोकान् सुकृतिनामगात् ।
गोकर्णस्तत्सुतः क्षोणीं गोकर्णेश्वरकृद्ददे । अष्टपञ्चाशतं वर्षांस्त्रिंशत्यज्ञा विवर्जितान् ।
सूनुर्नरेन्द्रादित्योऽस्य खिङ्खिलाख्याभिधोऽभवत् । भूतेश्वरप्रतिष्ठानामग्रधिष्ण्यस्य कारकः ।
दिव्यानुग्रहभाग्यूपाभिधो यस्य गुरुर्व्यधात् । उग्रेशं मातृचक्रस्य प्रभावोदयविषयः ।
भूत्वा षट्त्रिंशतं वर्षान् शतं चाह्नां विभुर्भुवः । यदीयैरनघान् लोकानामदत् सुकृतैः कृती ।
युधिष्ठिराभिधानोऽभूदथ राजा तदात्मजः । यः सूक्ष्माक्षतया लोकैः कथितोऽन्धयुधिष्ठिरः ।
तेन क्रमागतं राज्यं सावधानेन शासता । अनुजह्रे मितं कालं पूर्वभूपालपद्धतिः ।
काले कियत्यपि ततो यात्यभाग्यवशादसौ । सिषेवे श्रीमदक्षीबो यत्किञ्चन विधायितां ।
नान्वग्रहीदनुग्राह्यान् सञ्जग्राह धीमतः । न सत्कोपचाराणां प्रागिवासीत् प्रियङ्करः ।
दुर्विदग्धपर्षदा साकं निर्विशेषं सभाजितैः । परिजह्रे स दुर्ज्ञातो जाततेजोवधैर्बुधैः ।
सर्व्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनः । अकीर्त्तिहेतुः स महान्दोषस्तु पृथिवीपतेः ।
नयज्ञैर्गणितां दोषान् दोषतांश्च गुणान् विटैः । स लुप्तप्रतिभश्चक्रे शशकैस्तोजितोपमः ।
वाङ्मर्म्मच्छेदिनो दीर्घनर्म्मस्वल्पकथा विटैः । अनीश्वरोचिता तस्य क्रीडापि भयदाभवत् ।
पुरो मिथ्यागुणग्राही परोक्षे दोषदर्शकः । असुस्थिरादरो भूभृत् सोऽभूद्द्वेष्योऽनुजीविनां ।
मनागनवधानेन स्खलतस्तस्य भूपतेः । इत्थं राज्यस्थितिरगादचिरेण विसूत्रतां ।
उपेक्षितास्यनिर्द्रोहैरयतन्ताजितात्मनः । अथ लब्धबलास्तस्य नाशाय द्रोहिमन्त्रिणः ।
प्रभोः सङ्कोचिताशेषैश्वर्याङ्गैर्निरवग्रहं । राज्यं जिहीर्षवो भूपाश्चक्रिरे भूम्यनन्तराः ।
तदनु प्रार्थिताः सर्व्वे ते ते नानादिगाश्रयाः । आसन् राज्यामिषं प्राप्तुं श्येना इव ससम्भ्रमाः ।
अथोत्पन्नभयो राजा न शशाक निजस्थितिं । व्यवस्थापयितुं यन्त्रच्युतां कारुः शिलामिव ।
विरक्ते क्षमाभर्त्तुस्तस्मिन् राज्ये विसंस्थुले । उपायोऽस्य स्थितेर्हेतुर्नैकः कस्य न पप्रथे ।
इष्टदोषान् स्थितिं प्राप्तो हन्यादस्मानसंशयं । विचिन्त्येति स सामात्य जगृहेऽनिशमन्त्रिणः ।
अथ निरुरुधुस्ते सन्नद्धाबलैर्नृपमन्दिरं । व्यवहितजनाक्रन्दं भेरीरवैरतिभैरवैः ।
मदकरिघटाकेतुच्छायानिरुद्धरविप्रभा भवनवलभीः सम्मग्नो दिवापि तमोहताः ।
तैरन्तः स्वभुजो निवारितरणोद्देऽवकाशे ततस्त्यक्तश्रीर्नगरान्तरात्स नृपतिस्तात्पर्यतो निर्ययौ ।
आजानेयरजोऽङ्गरागललनासंस्थानमन्दश्रमक्षुभ्यत्पौरजनाश्रुलाजकणिकाकीर्णेन राजाध्वना ।
राज्याच्च्युतस्य बहवः परिवाररामाः कोशादि तस्य रिपवो भजतो विजह्रुः ।
सर्व्वोदितो विगलितस्य नगेन्द्रशृङ्गाद्दलीफलादिरभसादिव गण्डशैलाः ।

रम्यैः शैलपथैर्व्रजन् श्रमवशाच्छायां श्रितः शाखिनामासीनः प्रचलायितेन सुमहद्दुःखं विसस्मार सः ।
दूरात्पामरफुत्कृतैः श्रुतिपथप्राप्तैः प्रबुद्धस्त्वभूद्दृष्टैर्निर्झरवारिभिः सहमनाः श्वभ्रे निमज्जन्निव ।
नानावीरुत्तृणपरिमलैरुग्रगन्धा वनोर्व्योरम्याःक्षोभप्रतिहतशिलाः पिच्छिलाश्चाद्रिकुल्याः ।
कान्ता श्रान्तीर्भ्रमरकिसलयच्छायमुग्धाङ्गुलीभैरत्युच्चं निहिततनुभिर्भुक्तं तस्य दारैः ।
पर्य्यस्ताद्रितटाद्विलोक्य सुचिरं दूरीभवन्मण्डलं ग्रामाणामन्वयितुं जहतु नृपतेर्दारेषु दृष्ट्याञ्चलान् ।
चोलोरस्थविकीर्णपल्लवितमम्लानं स्वकीयस्थितैः सावेगं गिरिकन्दरासु पततां वृन्दैरपि क्रन्दितं ।
स्तनयुगवलनबद्धस्रस्तमूर्द्धांशुकानां त्रिकवलनविलोलं वीक्ष्य दूरात् स्वदेशं ।
अवहत रुदतीनां नीविविन्यस्तहस्तं पथि नृपवनितानामश्रुभिर्निर्झराम्भः ।
प्रीतिस्थैर्य्यैरचितवचनाश्चित्रयाशोककान्त्या मिथ्याजाग्रत्परणगुरुभिस्तैश्च तैश्चोपचारैः ।
तस्य क्लेशादुपगतवतो राज्यविभ्रंशदुःखं मन्दीचक्रुः स्वभुवि सुजना भूपतेर्भूमिपालाः ।

इति श्रीकाश्मीरकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां प्रथमस्तरङ्गः ।

चतुर्दशाधिकं वर्षं सहस्रं नवशामराः । मासाश्च विगताश्चाष्टाविंशति राजसु ॥

## ॥ अथ द्वितीयस्तरङ्गः ॥



विहितसमङ्गाः स्फुटाभ्यां धनुर्घटितं तथा नरकरटिनोर्द्दिष्टाङ्गाभ्यां गर्भं प्रतिग्रहक्रमतः ।
द्विविधघटनावाङ्म्यायां निषेवयिता विभोर्जयति ललनापुन्नागाभ्यां शरीरविनिर्म्मितिः ॥
भूयो राज्यार्जनोद्योगस्तेनात्यज्यत भूभुजा । जरसा शमिवाप्या च कर्म्ममूलमवाप्सया ।
अनयद्विनयोदान्तः समं स्वविपर्येण तान् । विषयान् वशिनामग्र्यः स तान्पश्चादपि विस्मृतिं ।
धावन्नाज्येच्छया दुर्गागलिकायां स्वमन्त्रिभिः । कालेन स्थापितो बद्धैस्त्यभ्यधायि तु कैरपि ।
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् । विक्रमादित्यभूभर्त्तुर्ज्ञातिरभ्यर्थ्यषिच्यत ।
शकारिर्व्विक्रमादित्य इति स भ्रममाश्रितैः । अन्यैरत्रान्यथालेखि विसंवादि कदर्थितं ।
इदं स्वभेदविधुरं हर्षादीनां धराभुजां । कञ्चित्कालमभूद्भोज्यं ततःप्रभृति मण्डलं ।
असपूर्व्वापि तेनोर्व्वी सपूर्व्वेव महीभुजा । लालिता हृदयज्ञेन पत्या नववधूरिव ।
भुक्त्वा द्वात्रिंशतं वर्षान् भुवं तस्मिन्दिवं गते । जलौकास्तत्सुतो भूमेर्भूषणं समपद्यत ।
पितुरेव समं कालं हृद्धिहेतोः स दिद्युते । विधुरत्पूर्णशीतांशुरिव शीतेतरार्चिषः ।
अथ वाक्पुष्टया सार्द्धं देव्या दिव्यप्रभावया । भुवन्तत्प्रभवोऽभुङ्क्त तुञ्जीनो रञ्जयन् प्रजाः ।
दम्पतीभ्यामियं ताभ्यामभूष्यत वसुन्धरा । गङ्गाशशाङ्कखण्डाभ्यां जटाभूरिव धूर्जटेः ।
मण्डलं साध्वसत्राणौ नानाशैवमनोरमं । शतद्रुदापयेयातां माहेन्द्रमिव कार्म्मुकं ।
चक्राते च महाभागौ विश्वमाभरणं भुवः । तुङ्गेश्वरं हरावासं कतिकाख्यञ्च पत्तनं ।
कश्चिन्नारवराज्यान्तः स्थाने चण्डातपोत्कटे । तत्प्रभावेण फलितं हृष्टैस्तत्रारोपितैः ।
शाक्यं सर्व्वजनप्रेक्ष्यं यस्मिंश्च महाकवेः । द्वैपायनमुनेरंशस्तत्काले चन्द्रकोऽभवत् ।
तयोः प्रभावमाहात्म्यजिज्ञासार्थमिवोद्यता । प्रजासु दुःसहा जातु व्यापद्दैवी व्यजृम्भत ।
पाकोन्मुखसमस्तशालिच्छन्ने केदारमण्डले । मासि भाद्रपदेऽकस्मात् पपात तुहिनं महत् ।
तस्मिन् विषमयोधुककालाकलुषितोपमे । न्यमज्जन् शालयः सार्कं प्रजानां जीविताशया ।

अथासीत् क्षुत्परिक्षामजनप्रेतकुलाकुलः । प्राकारो निरयस्येव घोरो दुर्भिक्षविप्लवः ।
पत्नीप्रीतिं सुतस्नेहं पितृदाक्षिण्यमातुरः । कुक्षिम्भरिः क्षुदन्धो विषयाराखिलो जनः ।
क्षुत्तापाग्निप्रगन् लज्जामभिमानं कुलोन्नतिं । असमाप्तक्रियाघाता लोकोलक्ष्मीकटाक्षितः ।
क्षामं कण्ठगतप्राणं याचमानं सुतं पिता । सुतो वा पितरं त्यक्त्वा चकार स्वस्य पोषणं ।
आर्य्यविशेषं बीभत्से स्वदेहेऽहंक्रियावतां । अभूद्राज्यार्थिनां युद्धं प्रेतानामिव देहिनां ।
इत्याभिभाषी क्षुत्क्षामो घोरो दिक्षिणो विपन् । एक एको जगज्जीवैरियेष स्वात्मपोषणं ।
तस्मिन् महाभये घोरे प्राणिनामतिदुःसहे । ददृशे लोकनाथस्य तस्यैव करुणार्द्रता ।
निवारितप्रतीहारः सर्वौषधिप्रोभितः । दर्शनेनैव दीनानामलक्ष्मीक्रममच्छिनत् ।
सपत्नीको निजैः कोशैः सञ्चयैर्मन्त्रिणामपि । क्रीतान्नः स दिवारात्रं प्राणिनः समजीवयत् ।
अटवीषु श्मशानेषु रथ्यास्ववसथेषु च । क्षुत्क्षामः क्ष्माभुजा तेन नहि कश्चिदुपेक्ष्यत ।
अतो निःशेषितधनः क्षोणाङ्गां वीक्ष्य मेदिनीं । कपायामेकदा देवीमेवमूचे सुदुःखितः ।
दैव्यस्मदपचारेण ध्रुवं केनापि दुस्तरा । जाता निरपराधानां जनानां व्यापदीदृशी ।
धिग्मामधन्यं यस्याग्रे लोकोऽयं शोकपीडितः । पश्यन्नशरणामुर्व्वीमनुयान्ती विपद्यते ।
प्रजा निःशरणा एता अन्योन्यं सान्त्वनोज्झिताः । अरक्षिता मयेऽमुष्मिन् किं कार्य्यं जीवितेन मे ।
यथा कथञ्चिल्लोकोऽयं दिनान्येतानि यत्नतः । मयानिवारिताः सर्व्वे नच कोऽपि व्यपद्यत ।
अतिक्रान्तप्रभावेयं कालदौरात्म्यपीडिता । निष्किञ्चनाद्य सञ्जाता पृथिवी गतगौरवा ।
तदिमाः सर्व्वतो मग्ना दारुणे व्यसनार्णवे । उपायः कतमस्तावत् समुद्धर्त्तुं ममः प्रजाः ।
निरालोको हि लोकोऽयं दुर्दिनग्रस्तभास्करः । कालरात्रिकुलैर्भिस्वकपरीत इव वर्त्तते ।
हिमसङ्घातदुर्लङ्घ्यक्षितिभृद्दुर्गनिर्गमाः । सहदारकुलायस्थखगवद्विवशा जनाः ।
गृहराय मतिमन्तश्च विद्यावन्तश्च जन्तवः । कालदौरात्म्यतः पश्य जाता निहतयोग्यताः ।
आशाः काञ्चनपुष्पकुड्मलकुलच्छन्ना न काः क्ष्मातले सौजन्यामृतवर्षिभिस्तिलकितं सेव्यैर्न किं मण्डलं ।
पन्थानः सुचिरोपचाररुचिरैर्व्याप्ता न कैः संस्तुतैस्तेषामद्य न सन्ति निष्कृतगुणाः कालेन ये साधिताः ।
तदेष गलितोपायो जुहोमि ज्वलने तनुं । नतु द्रष्टुं समर्थोऽस्मि प्रजानां नाशमीदृशं ।
धन्यास्ते पृथिवीपालाः सुखं ये निशि शेरते । पौरान् पुत्रानिव पुरः सर्व्वतो वीक्ष्य निर्वृतान् ।
इत्युक्त्वा करुणाविष्टो मुखमाच्छाद्य वाससा । निपत्य तल्पे निःशङ्कं रुरोद पृथिवीपतिः ।
निर्वातस्तिमितैर्दीपैरङ्गोरैः कौतुकादिव । वीक्ष्यमाणाय तं देवी जगाद जगतीभुजं ।
राजन् प्रजानां कुरुते कोऽयं मतिविपर्य्ययः । येनेतर इव स्वैरमधीरोचितमीहसे ।
यदसाध्यानि दुःखानि हन्तुं न प्रभविष्णुता । तस्मात्क्षितिपाल महतां महत्त्वस्य किमद्भुतं ।
कः शक्रः कतमः स्रष्टा वराकः कतमो यमः । सत्यव्रतानां भूपानां कर्त्तुं शासनलङ्घनं ।
पत्यौ भक्तिव्रतं स्त्रीणामद्रोहो मन्त्रिणां व्रतं । प्रजानुपालनेऽनन्यकर्म्मता भूभृतां व्रतं ।

ततः सुप्तोत्थित इव प्रभुर्दिव्यविलेपनः । समभुज्यत ताभिः स यथेच्छं चक्रनायकः ।
ईशानस्तस्य देवीभ्यां वितीर्णाङ्गदृतिं पुनः । अपायां चोद्यमाणायां चकितः पर्य्यशङ्कत ।
नदंस्तद्वचसा धीरः स च तत् स्वाङ्गमाययौ । तत्र योगेश्वरीचक्रं क्षिप्रमन्तरधीयत ।
अथाश्रूयत वाक्कासां माभूदीशान भीरुता । आस्वद्गृहाणि रत्नाङ्कं कृते चाक्षिप्य वञ्चना ।
अस्मद्वराद्दिव्यवपुः सन्धितः सन्धिमानसौ । आर्य्यत्वादार्य्यराजाख्यः ख्यातो भुवि भविष्यति ।
ततो दिव्याम्बरः स्रग्वी दिव्यभूषणभूषितः । ववन्दे सन्धिमान् प्रह्वः प्रागपूर्व्वस्मृतिर्गुरुं ।
ईशानोऽपि तमालिङ्ग्य स्वप्नेष्वपि सुदुर्लभं । भूमिकामाललम्बे कामिति को वक्तुमर्हति ।
असारस्य विचित्रस्य संसारं ध्यायतोर्मिथः । विवेकविशदा तत्र प्रावर्त्तत तयोः कथा ।
अथ वार्त्तां विदित्वेमां कुतोऽपि नगरौकसः । सवालवृद्धाः सामात्यास्तमभिवोद्धुमाययुः ।
पूर्व्वाकृतिविसंवादाद्भूमेनायं स इत्यथ । तेनाक्रियत संवासितिमिखिलान् स्वकृता वचः ।
अर्थानां शासितुं राष्ट्रं पौराणामपराजकं । सोऽभ्यमन्यत कृच्छ्रेण निस्पृहः शासनाद्गुरोः ।
प्रापय्योपवनोपान्तं तं दिव्याकृतिशोभिनं । सद्यः स्नापयामासुरभिषेकाम्बुभिर्द्विजाः ।
सत्वराजोचिताचारे न स शिक्षामपेक्षत । दृष्टकर्म्मा समस्तासु शिक्षुवाः प्रक्रिया व्यधात् ।
स राजोचितनेपथ्यः पौरस्त्रीचक्षुर्भिर्नी । सौधोत्सिक्तसाजलर्द्धा ससैन्यो प्राविशत् पुरीं ।
तस्मिन् विरजसि प्राज्यमाक्रामति नृपासनं । आचक्राम प्रजा व्यापत् दैवी न च मानुषी ।
प्राहरन् हृदयं तस्य स्त्रकाश्चरितविभ्रमाः । नितम्बिन्यो वनभुवः शमिनो न तु योषितः ।
वनप्रसूनसम्पर्कपुण्यगन्धसमर्पिणां । कर्पूरधूपसुरभिः कपैः पृष्टः स पिप्रिये ।
भूतेशवर्द्धमानेशविजयेशानपश्यतः । नियमो राजकार्येषु तस्याभूत् प्रतिवासरं ।
हरायतनसोपानक्षालनाम्भःकणाङ्कितैः । संस्पृष्टः पवनैः सोऽभूदामन्दानन्दविग्रहः ।
पूर्व्वपूजापनयने निराडम्बरमन्दरः । तेनैव द्रष्टुमशायि क्षपितो विजयेश्वरः ।
लिङ्गपीठलुठत्स्नानकुम्भाम्भःसम्भूर्ध्वनिः । शयानस्यार्थभूतस्य बभौ बन्दीदिवः ।
तापसैर्भस्मरुद्राक्षजटाजूटाङ्कितैर्बभौ । तस्य माहेश्वरी पर्षदिव भूमिपतेः सभा ।
शिवलिङ्गसहस्रस्य प्रतिष्ठाकर्म्मणि प्रभोः । प्रतिज्ञा प्रत्यहं तस्य नाभूद्विघटिता क्वचित् ।
प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य्य कल्पिता । सहस्रलिङ्गी तत्कृत्यै सर्व्वतोऽद्यापि दृश्यते ।
तासु तासु स वापीषु लिङ्गव्याजादरोपयत् । स पुण्यपुण्डरीकाणां जन्मनेऽसपरम्पराम् ।
स्थाने स्थाने जलान्तस्थ बहुसंख्यैर्निवेशितैः । असमशर्म्मदाभाति शिवलिङ्गैस्तरङ्गिणी ।
प्रतिलिङ्गं महाग्रामाः प्रत्यपाद्यन्त तेन ये । पर्य्यन्तामस्य तद्भागः कालेनाक्रान्तिमागतः ।
अकरोत् स महाहर्म्यैर्महालिङ्गैर्महाश्रयैः । महाविष्णुलिङ्गदर्शी महामाहेश्वरो महीं ।
कृत्वा सन्धीश्वरं देवमस्थानपिठकानने । ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं परं ।
भेदाश्च भीमां देवीश्च देवांश्चान्यान् पदे पदे । समठप्रतिमालिङ्गहर्म्यैर्निन्ये महार्थतां ।

स्वयं भूमिश्च तीर्थैश्च पूतं भक्तिविभूषितः । स एव भोक्तुमध्यासीत् प्रायः काश्मीरमण्डलं ।
स्नातस्य निर्झराम्भोभिः पुष्पलिङ्गार्चनोत्सवैः । राज्ञस्तस्य वनोर्वीषु मासः पुष्पाकरो ययौ ।
स शान्तिरम्यः काश्मीरे ग्रीष्मस्त्रिदिवदुर्लभः । हिमलिङ्गार्चनैः प्रायाद्वनान्तेषु कृतार्थतां ।
फुल्लाब्जषण्डकह्लाराः प्राप्य पुष्करिणीतटीः । लब्धोदयः स कम्बुन्दुपूजाध्यानपरोऽभवत् ।
शीतोत्पलवनोर्व्वापीरगन्धोद्धर्षनिर्वृताः । अवगाह्य स्वरार्थाभिः शरदं निर्विवेश सः ।
सार्द्धं तपोधनैस्तैस्तैर्भजतः सागरोत्सवम् । तस्याभूवन् भुवोभर्त्तुः सोमामाश्च रात्रयः ।
अत्यद्भुतं राज्यलाभमित्थं सफलयन् कृती । पञ्चाशतं निवर्षाणामत्यक्रामन् स वत्सरान् ।
ममत्वमतिनष्टस्य राज्यकार्य्याण्यपश्यतः । तस्मिन् काले प्रकृतयो विरागं प्रतिपेदिरे ।
अन्विष्यत नृपस्ताभिः कश्चिद्राज्याय सद्भुवे । राजपुत्रो जिगीषुश्च श्रीमान् यौधिष्ठिरे कुले ।
अगोप गोपादित्याख्यः काश्मीरेन्द्रजिगीषया । युधिष्ठिरप्रपौत्रं हि गान्धाराधिपतिस्तदा ।
वसन्नुपास्तमायाख्यः स तत्र तनयं क्रमात् । अवाप लक्षणैर्दिव्यैरमोघं मेघवाहनं ।
स तत्र पितुरादेशाद्वैष्णवाश्रयमानसः । राज्ञः प्राग्ज्योतिषेन्द्रस्य ययौ कन्यास्वयम्बरे ।
तत्र तं वारुणं छत्रं छायया राजसन्निधौ । भेजे वरस्रजा राजकन्यका चामृतप्रभा ।
तेन तस्य निमित्तेन वृद्धिमागामिनीं जनाः । प्रजामम्बुवाहस्य पाश्चात्येनेव वायुना ।
राज्ञा हि नरकेणैतद्वरुणाद्दुर्निवारणं । आनीतमकरोच्छायां न विना चक्रवर्त्तिनं ।
तमन्तिकं पितुः प्राप्तं पत्न्या लक्ष्म्या च संश्रितं । भूत्या निमन्त्रयामासुर्म्मन्त्रिणो वंश्ययोग्यतान् ।
अथार्य्यराजो विज्ञाय स्वराज्यं भेदजर्ज्जरं । प्रतिचक्रे न शोकोऽपि तस्थौ तत्यक्तुमुत्सुकः ।
अचिन्तयच्च सत्यं मे सम्प्रीतोऽभूत भावनः । सिद्धिविघ्नाममूल दोषानपाकर्त्तुं समुद्यतः ।
एत्य वसुनि निष्पाद्ये श्रमात् कौसीद्यमाश्रयन् । प्राहृषीवाध्वगो दिष्ट्या सोऽहितोऽस्मि न निद्रया ।
स्वकुले त्यजता लक्ष्मीं विरक्तां पण्यस्त्रीमिव । हठनिर्वासनक्रोडा दिष्ट्या नासादिता मया ।
शैलूषस्येव मे राज्यं रङ्गेऽस्मिन् वल्लनस्थिरं । निर्व्यूढावपि वैराग्यं दिष्ट्या न प्रेक्षकागताः ।
दिष्ट्या सदैव वैमुख्यमुच्चैरुद्घोषयन् श्रियः । त्यागक्षणेन भीतोऽस्मि विकत्थन इवाहवे ।
इति सञ्चिन्तयन्नन्तः सर्व्वत्यागोन्मुखो नृपः । मनोराज्यानि कुर्व्वाणो दरिद्र इव पिप्रिये ।
अन्येद्युः प्रकृतीः सर्व्वाः सन्निपात्य सभान्तरे । ताभ्यः प्रत्यर्पयच्छासमिव राज्यं सुरक्षितं ।
उज्झितं स्वेच्छया तच्च प्रयत्नेनापि नाशकन् । तं स्वीकारयितुं कश्चित् फणीन्द्रमिव कञ्चुकं ।
अर्च्चालिङ्गमुपादाय सोऽथ प्रायादुदङ्मुखः । धौतवासा निरुष्णीषः पद्भ्यामेव प्रजेश्वरः ।
तस्य पादार्पितदृशो व्रजतो नातिमितः प्रभोः । पश्चात्तं जग्मुः पौरा निःशब्दस्रवदस्रवः ।
स विलङ्घितगव्यूतिरुपविश्य तरोरधः । जनमेकैकमुद्वाष्पं न्यवर्त्तयत सान्त्वयन् ।
पथि शिखरिणां मूले मूले विलम्ब्य जनव्रजान् मितपरिकरो गच्छन्नूर्द्ध्वं क्रमात् समदृश्यत ।
गलितवसुधः सम्पूर्णोऽव्रजन् स निशापदाच्चन्द्र इव विनिर्यातः लोकैः कृतानुगमो जनैः ।

निःशेषं निकटात् स लोकमटवीमध्ये निरध्वास्पदं श्रीकाशेश्वरवाससमद्भुतपदं संप्राप्य चोत्साह्य च ।
भुजगनृपरिरोधमम्बरमत्सिद्धाङ्गसिद्धाङ्गनामेखीमौलिमणिप्रभोज्ज्वलगुहागेहं जगाहे वनं । १००
अथ वनचरस्रोतटद्रुमाधःपुटकघटोदरसंभृताम्बुपूरां । वसतिमकृत वासराबसाने शुचिमिलदपलवकल्पितोपतल्पां ।
स्फुटतारकास्तिमितातपाः शवलितच्छायाभुवः प्रादेशस्फुटमलमसिकातलमिलत्पुष्पप्रच्छन्नाः ।
सन्ध्यानावनपालरेणुरणितोन्मिश्रैः प्रपातान्बुभिः प्राप्तं दृक्पथमागतास्तमनघसिद्धामदूराद्वथः ।
वनहरिरसितैः पदे पदे स प्रतिभटतां पटहध्वनेर्दधानैः । अमनुत रटितैश्च कर्कटैटाः परिगलितां गमनोन्मुखश्रियामाम् ।
अन्येद्युर्विधिवदुपास्य पूर्वसन्ध्यामासन्ने नलिनसरस्युपात्तनिद्रः । आपालः परिचितगोदरामृतौघैः नन्दीशाध्युषितमवाप
भूतभर्तुः ।
नन्दिक्षेत्रे त्रिभुवनगुरोः सोऽयतमान यावत्तस्मा तावत् स्वयमभिमताप्तये आयते स्म । १०५
भस्मश्वेरः सुघटितजटाजूटबन्धोऽक्षसूत्री रुद्राक्षाढ्यो जरठमुनिभिः सस्पृहं वीक्ष्यमाणः ।
भ्राम्यच्छ्रीकण्ठदग्पनिनतजनितमहाघण्टिकयो भैक्ष्यदेतोर्भिक्षाभार्गोपधानासु प्रतिमुनिनिलयं संभ्रमात्तापसीषु ।
दूरैर्भिक्षाकपाले शुचिफलकुसुमश्रेणिभिः पूर्यमाणे काले वैराग्यवेश्यमनुपतनपरमार्थमात्राभवोऽभूत् ॥ १०८
राजानः ॥ ६ ॥ आदितः राजानः ॥ ४४ ॥ समाः आदितः ॥ ५४२ ॥
इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां द्वितीयस्तरङ्गः ॥
शतद्वये वत्सराणामष्टभिः परिवर्जिते । अस्मिन् द्वितीये व्याख्याताः षट् प्रख्यातगुणा नृपाः ॥

---

ततः प्रभृति तस्याज्ञा सार्व्वभौमस्य भूपतेः। हिंसाविरतिरूपा या न कैश्चिदुदलङ्घ्यत। ८०
क्षुद्रैश्चादिभिर्नाप्सु हिंसाकर्मेष्यते न च। न श्येनप्रमुखैर्व्योम्नि तद्राज्ये जन्तवो हताः।
अतिक्रामति कालेऽथ कोऽपि शोकाकुलो द्विजः। पुत्रं गतासुमादाय द्वारि चक्रन्द भूपतेः।
दुर्गया प्रार्थितं राजन्नुपहारं विनैव मे। अनन्यसन्ततेः सूनुर्ज्वरेणाद्य विपद्यते।
यद्यहिंसाग्रहेणेमं क्षितिपाल न रक्षसि। एतद्विपत्तौ तत्कोऽन्यो निमित्तं प्रतिभाति मे।
निर्णयो वर्णगुरुणा त्वयैव महीयतां। मा गुणस्य परीक्षा स्यात् प्राणानां कियदन्तरं। ८५
तपस्विनामपि ये जग्मुर्ब्राह्मणप्राणसंक्षये। का मानसेऽधुना भूमेः प्रजापालाश्चिरोषिताः।
इति ब्रुवति साक्षेपं शोकदुःखातुरे द्विजे। आपदार्त्तिहरो राजा चिरमेवं व्यचिन्तयत्।
न वध्याः प्राणिनइति प्राग्योऽस्मि समकल्पयं। विप्रार्थमपि किं कुर्यां स प्रतिज्ञातविप्लवं।
निमित्तीकृत्य मामद्य विपद्येत द्विजो यदि। तथाप्यत्यन्तपापीयानर्थः संकल्पविभ्रमः।
नैति मे संशयभ्रान्तमेकपक्षावलम्बनं। सङ्कटावर्त्तपतितं प्लवमानमिव मानसं। ९०
तत् स्वदेहोपहारेण दुर्गां तोषयता मया। प्रतिज्ञया समं न्याय्यं रक्षितुं जीवितं द्वयोः।
इति सञ्चिन्त्य सुचिरं देहदानोद्यतो नृपः। यः प्रियं तव कर्त्तास्मीत्युक्ता विप्रं व्यसर्जयत्।
क्षपायां क्ष्मापतिमथ समुपाहर्त्तुमुद्यतं। निषिध्य दुर्गा व्यधित प्रकृतिस्थं द्विजात्मजं।
इत्याद्यद्भुतमन्यदपि चरितं तस्य भूपतेः। पृथग्जनेषु सम्भाव्यं वर्णयन्तस्त्रपामहे।
अथवा रचनानिर्व्विशेषमार्गेण वर्त्मना। प्रस्थितानमुदन्वन्ति कोऽर्थश्चित्तानुवर्त्तनं। ९५
तस्मिन्नस्तं गते भुक्ता क्ष्मां चतुस्त्रिंशतं समाः। असादित्यमिवाशेषं निरालोकमभूज्जगत्।
अथ क्ष्मामध्यरक्षत्तां श्रेष्ठसेनस्तदात्मजः। प्राहुः प्रवरसेनं यं तुञ्जीनं चापरे जनाः।
दोस्तम्भसम्भृतामन्दकृपाणमणिदर्पणे। सङ्क्रान्तेवाम्बुधौ यस्य भुवनश्रीर्व्यभाव्यत।
समातृचक्रं निर्माय यः पूर्वं प्रवरेश्वरं। पुण्याः पुराणाधिष्ठाने प्रतिष्ठा विविधा व्यधात्।
गृहाङ्गनमिव क्षोणीं गमयन्व्याप्तवर्त्तिनीं। त्रिगर्त्तोर्व्वीं शासनत्वे प्रवरेशाय यो ददौ। १००
ईशो नृपाणां निःशेषक्ष्माकेदारकुटुम्बिनां। स समास्त्रिंशतं भूभृदनिर्व्विग्नाशयोऽभवत्।
हिरण्यतोरमाणाख्यौ व्यधत्तामथ तत्सुतौ। साम्राज्ययुवराजत्वभाजने रञ्जनं क्षितेः।
बालाहतानां प्राचुर्यं विनिवार्य समस्तसम्। तोरमाणेन दीनाराः स्वाहताः सम्प्रवर्त्तिताः।
मामवज्ञाय राज्ञेव कस्मादेतेन वल्गितं। इति तं पूर्व्वजो राजा क्रोधनो बन्धने व्यधात्।
चिरं क्लिश्यत्यकद्वच्च तत्र तस्याञ्जनाभिधा। ऐक्ष्वाकस्यात्मजा राज्ञी वज्रेन्द्रस्यास्त गुर्व्विणी। १०५
आसन्नप्रसवा भर्त्रा सचपं तेन बोधिता। सुतं प्रविष्टा प्रासोष्ट कुलालनिलये क्वचित्।
स कुम्भकारगेहिन्या काकेव पिकशावकः। पुत्रीकृतो राजपुत्रः पर्याप्तं पर्यवर्द्धत।
जनयित्र्या कुलाख्यायां रक्षित्र्या विहितोऽभवत्। रक्षन्तं भुजङ्गप्राय प्रच्छन्नमिव सेवधिः।
पौत्रः प्रवरसेनस्य गिरा मातुर्नृपात्मजः। पैतामहेन नाम्नैव कुलाख्या स्थापितोऽभवत्।

वर्द्धमानस्य सम्पर्कं न सेहे सवयास्विनां । तेजस्विनेत्री रविकः शिशुः पद्म इवाम्भसां ।
तं कुलीनेषु पूर्गेषु विद्याविद्विष दारकैः । अन्वीतमेव ददृशुः क्रीडन्तं विस्मयाकुलाः ।
स्वच्छन्दस्यात्युदारेच्छा राजा चक्रे स दारकैः । स्तोमस्त्रावः क्रीडद्भिर्येन बालमृगैरिव ।
संविभेजे स जयाद वयोऽचक्र स सोऽर्भकान् । अराजोचितमाचारं नैव किञ्चिदसेवत ।
भाण्डादि कर्तुं मृत्पिण्डं कुम्भकारैः समर्पितं । क्रीडता चक्रिरे तेन शिवलिङ्गपरम्पराः ।
तथा माधुर्य्यचर्य्यः स क्रीडन् जातु व्यलोक्यत । मातुलेन जयेन्द्रेण सादरं चाभ्यनन्द्यत ।
आवेद्यमानं शिशुभिस्तं जयेन्द्रोऽयमित्यसौ । भूपालवत्सावहेलं पश्यन्नन्वपतीदिव ।
समाप्य मन्त्रावष्टम्भात्समसा मान्यवंशजं । मातृष्वाद्भगिनीभर्तुर्भागिनेयमग्रहत ।
मत्सरस्तर्कजिज्ञासारम्भेनानुससार तं । प्राप्तकृदमौत्सुक्यात् स्मारं स व्यलोकयत् ।
सा स चान्योन्यमन्वन्यू पश्यन्तौ भ्रातरौ चिरात् । निःश्वासात् द्विगुणोष्माणि मुक्तस्मून्यमुञ्चतां ।
कुत्राप्यादारको मातः कावेतावित्ति पृष्टवान् । अकथ्यतेत्यं वत्सैषा माता ऽयं मातुलस्य ते ।
पितुर्बन्धेन सक्रोधं तं कालापेक्षया क्षमं । विज्ञाप्यित्वा जयेन्द्रोऽथ कार्य्यसंघाय निर्ययौ ।
उत्पिञ्जात्पादगामञ्च तस्मिन् भ्राता यदृच्छया । बन्धात्मुक्तासृनरणिस्मोरमाणोऽसमाययौ ।
निवार्य्य मरणोद्योगं मातुर्निर्वेदखेदितः । ययौ प्रवरसेनोऽथ तीर्थान्स्वाहिगन्तरं ।
रक्षिता दशमासोनाः षष्टिमेकविंशतं समाः । तस्मिन् क्षणे हिरण्योऽपि प्रान्ति निःसन्ततिर्ययौ ।
तत्रानेहस्युज्जयिन्यां श्रीमान् हर्षापराभिधः । एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत् ।
भूपमद्भुतसौभाग्यं श्रीर्यद्भुजमभजत् । विहाय हरिवक्षस्य चतुरस्रागराश्च यं ।
मन्त्री कल्यापकरणं गुणो येन प्रवर्त्तते । श्रीमत्सुगुणिनोऽद्यापि तिष्ठन्त्युन्नतकन्धराः ।
म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः । शकान्विनाश्य येनादौ कार्य्यभारो लघुः कृतः ।
नानादिगन्तराख्यातं गुणवत्सुलभं नृपं । तं कविर्मातृगुप्ताख्यः सभास्थानस्थमासदत् ।
स गम्भीरस्य भूभर्तुरनुभावं गुणाद्भुतं । विविधाख्यानसंहृष्टस्तस्याभ्युन्नम्य व्यचिन्तयत् ।
सोऽयमासादितः पुण्यैः क्षोणिपालो गुणिप्रियः । परभागोपरागाय पूर्व्वोऽनुस्य महीभुजः ।
अस्मिन् राजनि तत्त्वज्ञैः सूरिभिः सम्पदस्तुते । नाङ्गनिर्दीयते जातु मानाय च गुणाय च ।
भङ्गामुक्ताम्स्विदधती स्वाभिप्रायप्रकाशनं । वैदग्ध्यं मन्थरां नैति बुद्धिः कुलवधूरिव ।
खिलीकृतस्वनालापे युक्तायुक्तविवेकरि । नायाति सेव्यमानेऽस्मिन् स्वगुणोऽनर्थकारितां ।
चलाप्तवद्भिः सावद्यद्विवेचमणीषिकां । जीवन्मरणमप्याप्ते गुणिभिर्नानुभूयते ।
सद्भावनानुसारेण प्रवृत्तोऽस्माद्विवेकिनः । प्राप्यते नाशिनोऽध्यासं प्रीतिदायी महाशयैः ।
ग्रहण् यथा गुणं सम्यक्मुचितप्रतिपत्तिभिः । अन्तरज्ञः समस्तानामयमुत्साहवर्द्धनः ।
सेवया दृष्टकष्टस्य दाक्षिण्योत्पादनक्षमः । अत्र को न स भृत्यानां हिमाद्रौ हिमविक्रयः ।
मिथ्याख्यातगुणो नास्मो नामात्यः कलहप्रियः । चलत्यसन्धः क्षेयो वा नास्त्यनेऽस्य महीपतेः ।

अश्लीलालापिनोऽन्योन्यं नर्मोक्ता मर्मभेदिनः। अन्यप्रवेशासहनाः संहतास्तत्र सेवकाः। १४०
छन्दानुवर्त्तिनामेव निजविश्वासवन्दिनाम्। सर्वेषामन्यतान्यासां मुखप्रेक्षी न पार्थिवः।
अनेन सह सञ्जातः संलापो विपुलोदयः। लभ्यते नान्तरा चैकं दुर्जातैर्जातु दुर्जनैः।
सर्वदोषोज्झितं सेव्यं नृपमेवमिमं मम। समासादयतः पुण्यैरदूरे स्वार्थसिद्धयः।
गम्भीरश्च गुणज्ञश्च स्थिरबुद्धिश्च पार्थिवः। एष सेवाभयं त्यक्त्वा निषेव्यः प्रतिभाति मे।
नवाम्बुजमिवादाय रक्षितादन्यराजवत्। भ्राम्यतो भूतलेऽमुष्मिन् सेव्योऽन्यः प्रतिभाति मे। १४५
इति सञ्चिन्त्य सुदृढं स नवामिव तां सभां। नानुरञ्जयमासे स्म गुणिगोष्ठीषु सभ्यगः।
स्तुतिपूर्वं गुणानेव दर्शयन्तं विशाम्पतिः। विशिष्टयोग्यतासिद्ध्यै विवेदाराधनोन्मुखं।
अचिन्तयच्च नायं स्याद्गुणिमात्रं महाशयः। उदात्तं सत्क्रियार्हत्वं वदत्यस्य गभीरता।
इति सञ्चिन्त्य राजापि ज्ञातुं तस्यान्तरं मतेः। नाक्रियन्त परीक्षार्थं यथावत्ताभ्यसत्क्रियाः।
स तेनानुपचारेण तमुदात्ताशयं नृपं। स्वीकर्त्तारं विदन्धीमान् सिषेवे प्रीतिमाश्रितः। १५०
क्रमोपचीयमानेन सेवाभ्यासेन धीमतः। तस्य नोद्वेगमगमत् स्वकाय इव पार्थिवः।
नातीव स्वल्पया स्थित्या नातीवाप्यथ दीर्घया। सरलिमार्जवेनेव राजा निन्ये प्रसन्नतां।
नर्मभिर्गर्भचेटानां दाःस्थानां विक्रियाक्रमैः। मिथ्यास्तवैर्विटानाञ्च न स क्षोभमनीयत।
प्रसन्नालापसम्प्रीतो छायापहरवाचनः। प्रतिस्पर्द्धि च कुष्यत्वावज्ञायामभूत् प्रभोः।
वीक्षणं राजदासीनां राजद्विष्टैस्सहासनम्। राजाग्रे च कथां नीचैः कार्यविज्ञाचचार सः। १५५
स्वभावाद्राजपुत्रैः सज्जनैराजनिन्दकैः। नाक्षमप्रभोरुपालम्भो लेभे पैशुन्यजीविभिः।
वदद्भिरादरात् स्थैर्य्यैकफलाश्रयं प्रभोः। निन्ये सोत्साहवैचित्र्यं सेवोत्साहावसरिष्णुभिः।
अन्यात्कर्षानपि वदन् प्रयत्नेन निरायतः। स्वविद्याद्योतकश्चोऽभूत् सत्यानां हृदयंगमः।
एवं स सेवमानस्समुद्योगेन बलीयसा। अनिर्विण्णो महागुप्तः षडृतूनत्यवाहयत्।
अथ तं कृशमव्याजं धूसरं जीर्णवाससं। वहिर्यातु विनिर्यान्तो राजा वीक्ष्य व्यचिन्तयत्। १६०
देशिको निःशरणो गुणवान् बान्धवोज्झितः। दार्ढ्यञ्चिरमुना कष्टं सोऽयमावासितो मया।
कोऽस्याश्रयः किमशनं कानि प्रावरणानि वा। इत्येवमर्थविमूढेन मया हन्त न चिन्तितम्।
दशनेनैव न मया शोभयाद्यापि योजितः। शीतवातातपैः शुष्यन् सोऽयं पुरुषपादपः।
अस्य म्लानस्य भैषज्यं निर्विण्णस्य विनोदनं। आनन्दश्च वा क्षमश्चेदं कोऽपि दध्यादसंपदः।
नास्मै चिन्तामणिं दद्यां नामृतं वा निषेवितः। मया यदयमेनावज्ञामूढेन परीक्ष्यते। १६५
तदमुष्य गुणित्वस्य लीनं सेवाश्रमस्य च। प्रतिपत्त्या कतमया तावदानृण्यमाप्नुयात्।
इति चिन्तयतस्तस्य राज्ञस्तं सेवकं प्रति। सम्प्रसादोचिता काचित् प्रत्यग्राऽभूत् सत्क्रिया।
ततः प्रावर्त्तत स्फारनीहारलवदायिभिः। दक्षिणवायुं प्रालेयपवमानैर्हिमागमः।

त्यागिनो निष्कलङ्कस्य कोदोषोऽस्य महीपतेः । ममापुण्यस्य तच्चिह्नं यच्छ्रेयःप्रतिबन्धकम्।
रत्नोज्ज्वलाः प्रविकिरेल्लहरीसमीरैरब्धिः क्रियेत यदि रत्नतटाभिमुख्यः । १००
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां दातुर्मनागपि न तस्य तु दातृतायाः ।
उद्यानफललुब्धानां वरं राजोपजीविनः । न तु तत्स्वामिनस्तीव्रपरिक्लेशैः फलन्ति ये ।
तिष्ठन्ति ये पशुपतेः किल पादमूले सम्प्राप्यते झटिति तैर्नहि भस्मनोऽन्यत् ।
ये तद्वृषस्य तु समुज्ज्वलजातरूपप्राप्त्या न कानि सुदिनानि सदैव तेषां ।
चिन्तयन्नपि पश्यामि न किञ्चिद्दोषमात्मनः । यातो विरक्तिं यं ज्ञात्वा सेव्यमानोऽप्ययं नृपः ।
अथवा नादृतोऽन्येन सम्प्राप्तोऽन्तिकमाश्रयात् । कः फलेनाभिसम्बन्धं गतानुगतिकात् प्रभोः ।
अन्तर्ये सततं लुठन्ति गणितास्तानेव पाथोधरैरात्तानापतितांस्तरङ्गवलयैरालिङ्ग्य रत्नश्रियो ।
व्यक्तं मौक्तिकरत्नतां जलकणान् सम्प्रापयत्यम्बुधिः प्रायोऽन्येन कृतादरो लघुरपि प्राप्तोऽर्च्यते स्वामिभिः । १०५
इदं संचिन्तयन् सोऽभूत्तस्य तस्मिन्निरादरः । खिन्नस्य हि विपर्य्येति तत्त्वज्ञस्यापि शेमुषी ।
प्रभातायां विभावर्य्यामथास्थानस्थितो नृपः । आकार्य्यतां मातृगुप्त इति क्षत्तारमादिशत् ।
ततः प्रधावितानेकप्रतीहारप्रवेशितः । प्रविवेश सभीभर्त्तुस्सकम्प इव सोऽन्तिकं ।
तस्मै कृतप्रणामाय भूर्ज्जपत्रादेव पार्थिवः । भ्रूसंज्ञितेन व्यतरल्लेखं लेखाधिकारिणा ।
स्वयञ्च तमुवाचाङ्ग कश्मीरान् वेत्ति किं भवान् । गत्वा तत्राधिकारिभ्य एतच्छासनमर्प्यतां । ११०
स ज्ञापितोऽस्मद्देशेन यो लेखं वाचये त्वयि । सन्दिष्टा प्रयत्नेन विमर्शव्या न जातुचित् ।
अविज्ञाताशयो राज्ञस्तामाज्ञां क्लेशशंकितः । सोऽवहद्दहनस्थानां सन् रत्नाकरद्युतिम् ।
यथादेशस्तथेत्युक्त्वा मातृगुप्ते विनिर्गते । निर्गर्व्वः पूर्ववद्राजा सभ्यावाप्तैः सहालपत् ।
अथ क्लेशार्चितं वासमपाथेयमबान्धवं । दृष्ट्वा यान्तं मातृगुप्तं निनिन्देति नृपं जनः ।
अहो नरेश्वरस्येयं यत्किञ्चन विधायिता । पृथग्जनोचिते कर्मण्यर्हन्तं निदधाति यः । ११५
दुराशया धृतक्लेशं सेवमानमहर्निशं । ध्रुवं क्लेशार्हमेवैनं ज्ञातवानबुधो नृपः ।
उपायं तं पुरस्कृत्य सेवते सेवकः प्रभुं । अनन्तरफलस्तत्रैव योग्यं तं किल मन्यते ।
सुखार्थी नागारिप्रतिभयश्रमात् प्रत्युत सुखं अहो शेषस्तल्पीकृततनुनिषेव्यामुररिपुं ।
यतस्तेनामुष्मिन्नधिगतवता क्लेशमहतां श्रमादायि न्यस्तं निरवधि धराभारवहनम् ।
अयमेतादृशेष्वेषु गुणवत्सु गुणाधिकं । आत्मानं गुणवान्पश्यन्नाश्चर्यमतिमाश्रयत् ।
अनन्तरज्ञः कोऽन्योऽस्माद्गुणान्दर्शयतेऽधिकान् । अस्मै गुणवते पूजां यश्चकार किलेदृशीं । १२०
यो नानाद्युतिमत्पदार्थरसिकोऽसारेऽपि शक्रायुधे सप्रेमा स विलोक्य वर्णमिह मे किं किं न कुर्य्यात् प्रियं ।
इत्याविष्कृतवर्णराजि सहते योऽवशिष्टोऽभ्रोल्लवान् नान्वस्यति तं विहाय जलदं कोऽन्योऽस्ति शून्याशयः ।
गच्छतो मातृगुप्तस्य निर्दैन्यस्यैव वर्त्मसु । नाभूत् क्लेशोऽर्थमाहात्म्यादिकल्पः कोऽपि चेतसि ।
अहंपूर्व्विकयोद्भिर्निमित्तैः शुभशंसिभिः । प्रवितीर्णकरालम्ब इव न श्रममाददे ।

अपश्यत् स फणाकोटौ कञ्चकीटमहेः पथि । खेऽपि प्रासादमारुह्य खद्योतायितनागरम् ।
अचिन्तयच्च शास्त्रज्ञो निमित्तैः शुभशंसिभिः । एतैर्भूभर्तुरादेशो ध्रुवं मे स्याच्छुभावहः ।
फलं मम तपोयोऽपि कार्मीरेषु भवेद्यदि । अनर्घदेशमाहात्म्यात् किं किं नातिशयीत तत् ।
अकण्टकलताः पन्थानो बालभानुनिभा द्रुमाः । उपागमन् गच्छतोऽस्य सत्क्रियार्थं पदे पदे ।
इत्थं विलङ्घिताकाशं लीलानीलकदम्बकम् । मङ्गल्यदधिपात्राभं ददर्शाग्रे हिमाचलम् ।
सरस्वत्स्यन्दसुभगा गङ्गाशीकरवाहिनः । प्रत्युद्ययुस्तं मरुतः पान्थार्थाः संस्तुता भुवः ।
क्रमवर्त्माभिधाने स प्रदेशे प्राप्तवांस्ततः । ठक्कं काम्बुवनामानं योऽत्र शूरपुरे स्थितः ।
नानाजनपदाकीर्णे स्थाने तत्राथ शुश्रुवान् । काश्मीरकान् महामात्यान् स्थितान् केनापि हेतुना ।
ततोऽपनीतप्रावेशः प्रहृष्टो धन्वनांशुकैः । स जगामान्तिकं तेषां दातुं नृपतिशासनम् ।
तत्प्रयाणं समुच्छ्रितैः शकुनैः सूचितोदयम् । पान्थाः केऽप्यन्वयुर्द्रष्टुं निमित्तानां फलोद्गमे ।
श्रुत्वाथ विक्रमादित्यदूतः प्राप्त इति द्रुतम् । द्वास्थाः काश्मीरमन्त्रिभ्यस्तमागतं न्यवेदयन् ।
आगच्छत प्रविशतेत्युच्यमानोऽथ सर्वतः । स तान् समस्तसामन्तानासमादानिवारितः ।
यथाप्रधानं सचिवैर्विहितोचितसत्क्रियः । ततः पराह्णमध्यास्त तन्निर्दिष्टमासनम् ।
कृतांहतेरथामात्यैराज्ञां पृष्टो महीभुजः । शनैस्तच्छासनं तेभ्यो लज्जमानस्तदार्पयत् ।
तेऽभिवन्द्य प्रभोर्लेखमुपांशु मिलितास्ततः । उन्मुच्य वाचयित्वैतमवोचन् विनयान्विताः ।
मातृगुप्त इति श्लाघ्यं भवतामेव नाम किम् । एवमेतदित्युक्ते सोऽपि तान् विहितस्मितः ।
कः कोऽत्र संनिधातृणामित्यश्रूयत वाक् ततः । राज्याभिषेकसम्भारो दृश्यते स च संभृतः ।
ततः कलकलोत्तालभूरिलोकसमाकुलः । प्रदेशः क्षणमात्रेण सोऽभूत् क्षुभ्यन्निवार्णवः ।
अथ प्राङ्मुखसौवर्णभद्रपीठप्रतिष्ठितः । सन्निपत्य प्रकृतिभिर्मातृगुप्तोऽभ्यषिच्यत ।
तस्य विन्ध्यतटव्यूढवक्षसः परिनिर्लुठन् । सशब्दमभिषेकाम्बु रेवान्तरवदाबभौ ।
अथ स्नातानुलिप्ताङ्गमश्नाङ्गामुक्तभूषणम् । व्यजिज्ञपन्तं राजानं कृतराजासनं प्रजाः ।
अर्थितेन स्वयं त्रातुं विक्रमादित्यभूभुजा । निर्दिष्टः स्वसमानस्त्वं शाधि नः पृथिवीमिमाम् ।
मण्डलानि विलभ्यन्ते येन तेन प्रतिक्षणं । मामंस्था मण्डलं राजन् विलम्बन्तदिदं परैः ।
कर्मभिः स्वैरवाप्तस्य जन्मनः पितरौ यथा । राज्ञां तथान्ये राज्यस्य प्रहृत्तावेव कारणम् ।
इत्थं स्थिते परं कश्चिन्नदीयोऽस्मीति शंसता । न सेवा भवता राजन् वयमात्मा च लाघवम् ।
इति तैस्तथ्यमुक्तोऽपि संस्मरन् स्वामिसत्क्रियाम् । मातृगुप्तमहीपालः क्षणमासीत् कृतस्मितः ।
दानेन सुदिनं तूर्णं स्वराज्योर्जितेन सः । तथैव मङ्गलोदर्कं तद्दिनं निरवर्तयत् ।
पुरप्रवेशायान्येद्युरर्थ्यमानोऽथ मन्त्रिभिः । अद्भुतप्राभृतव्यूहं राज्यदातुर्व्यसर्जयत् ।
देशकाल्यानुसारेण स्पर्धामिव च तां विदन् । स्वामिनो मनसि प्रीतस्त्यागं स्वममन्यत ।
अथाकृत्यापरान् भृत्यान् स्वकं सेवास्मृतिं प्रभोः । सप्तार्णास्वपि स्थानानि प्राहिणोत् प्राभृतानि सः ।

अव्याजौदार्य्यधर्य्यस्य श्रुत्वेति नृपतेर्वचः। कृतज्ञो मातृगुप्तः सन्निर्व्याजमभाषत।
यान्त्यक्षराण्यन्तरेण वाच्यं वक्तुं न पार्य्यते। का गतिस्त्वद्गुणादाने सर्व्वोदाहरणं विना।
अतः पक्षमपास्य किञ्चिदेव मयोच्यते। अव्याजार्जवमप्येतदार्य्यैरमवधीर्य्यते ।
सर्व्वः स्मरति सर्व्वस्य प्रागवस्थासु लाघवम्। आत्मैव वेत्ति माहात्म्यं वर्त्तमाने क्षणे पुनः ।
पूर्व्वावस्था मदीया ते त्वदीया या च मे हृदि। ताभ्यां विमोहितावावां न विद्वोऽन्योन्यमाशयम्।
राजा भूत्वा कथं मादृक् प्रतिगृह्णातु सम्पदः। कथमेकपदे सर्व्वमौचित्यपरिमार्जनु।
असाधारणमौदार्य्यमाहात्म्यं तस्य भूपतेः। भोगमाचक्षते मादृक् किं साधारणतां नयेत्।
अपि च स्पृहयालुः स्यां भोगेभ्यो यदि भूपते। म्रियमाणेऽभिमाने मे केन ते विनिवारिताः।
यस्मोपकृतमनेन तद्विना प्रत्युपक्रियां। जीर्णमेवाधुनाङ्गेषु प्रभवत्वेव निश्चयः।
या गतिर्भूभुजोऽमुष्य मया तामनुगच्छता। पापापापविवेकस्य स्थानिर्नैया प्रकाश्यतां।
एतावत्येव कर्त्तव्ये यातेऽस्मिन् कोर्त्तिशेषताम्। भोगमात्रपरित्यागादिदमो मत्प्रसन्नतां।
इत्युक्त्वा विरते तस्मिन् जगाद जगतीपतिः। त्वदीया न मया स्पृश्या त्वयि जीवति सम्पदः।
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः। सर्व्वं सन्न्यस्य सुकृती मातृगुप्तोऽभवद्यतिः।
राजा प्रवरसेनोऽपि कश्मीरोत्पत्तिमङ्गला। निखिलां मातृगुप्ताय प्राहिणोत् दृढनिश्चयः।
स हठापतितां लक्ष्मीं भिक्षाभुक् प्रतिपादयन्। सर्व्वार्थिभ्यः कृती वर्षान्दश प्राणानधारयत्।
अन्योन्यं साभिमानानामन्योन्यौचित्यशालिनां। त्रयाणामपि वृत्तान्त एष विस्मयदायकः।
राजा प्रवरसेनोऽथ समयत्नवनीधराम्। अलङ्कुलगराः ककुभो दृढुत्य यश्रवो न्यधात्।
पीताश्लिष्टद्वितोर्म्मिभिन् कुम्भयोनिरिवानयन्। तस्य प्रतापः प्रभवन् भुवनानि प्रसह्यतां।
गुप्त्यस्तमालपत्राणि शीर्णताडीदलानि च। तालुनार्णवतीराणि चक्रेऽरिस्त्रीमुखानि च।
स गङ्गानिर्झिताङ्गस्य पूर्व्ववारिनिधेर्व्यधात्। सैन्यैभमदनिस्यन्दैः कालिन्दीसङ्गमश्रियं।
रोधस्यपरपाथोधेः कटकैः स्पृष्टदिक्तटैः। चकारोत्पाद्य वीराद्यामपो राष्ट्रविपाटनम्।
यशोर्थिनः पार्थिवेषु देवरागवशीकृतः। बद्धधे धर्मविजयस्तस्य विनिश्चितकृतो।
वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात्। राज्ये प्रतापशीलं स शीलादित्यापराभिधं।
सिंहासनं स्ववंश्यानां तेनाहितमतन्द्रितः। विक्रमादित्यवसतेरानीतं स्वपुरं पुनः।
हेठनुदीर्य्य विविधानमन्यानं पराजयम्। सप्त वारान् स तत्याज जित्वा मुमूर्षुमभुजं।
धार्ष्ट्याद्याष्टम वारे हेतुमाख्यातुमुद्यतम्। धिक्पराङ्मुख्यतां सोऽयमित्यूचे नृपतिः क्रुधा।
अवध्योऽयं परपत्नेन वीरेत्युक्त्वा भयोन्मुकः। मध्यसभं नतन्नोऽस्य सोऽनुकुर्व्वन् कलापिनं।
मत्यं केकाश्च शिखिनो दृष्ट्वास्मै द्रविणं नृपः। अभयेन समं प्रादात्ताताङ्कुरणोचितं।
वसतोऽस्य दिशो जित्वा सनुः पैतामहे पुरे। कर्त्तुं पुरं स्वनामाङ्कं पप्रथे स मनोरथः।
रात्रौ चैकश्च लग्नश्च दिव्यं ज्ञातुमथेकदा। स धीरो वीरचर्य्यायां निर्ययौ पार्थिवार्य्यमा।

तमित्थं कथयन्तं सा ज्ञात्वा निश्चलनिश्चयम्। एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः।
भुवस्तले हि संस्प्रष्टुं न दिव्या मर्त्यधर्मिभिः। तद्गच्छ कूरमङ्गेत्युक्त्वा सान्तर्दधे ततः।
अनुग्रन्यजन्मा भूयासन्तया देव्येति चिन्तयन्। प्रयागवटशाखायामुद्बन्धादत्यजत् स्ववपुस्ततः।
सोऽजायत रणादित्यो रणारम्भा च सा भुवि। मर्त्यभावेऽपि यज्जैव अस्तो जन्मान्तरस्मृतिं।
रतिसेनाभिधश्चोलराजः सन्ध्योऽब्धिपूजने। तामन्तरङ्गान्तराम्भे रत्नराजिमिवोज्ज्वलाम्।
आवास्याद्भुतदिव्योर्मिं तामलङ्कृतयौवनां। दिव्यांशो इयितोऽस्यो नार्थिभ्योऽपि ददौ नृपः।
रणादित्यनृपामात्ये दूत्यायाते तथैव तं। प्रत्याख्याने कुमाराच्यो सैव तद्वरणं वरम्।
तदर्थमेव कथितस्तोत्पत्तिस्तातस्ततः पिता। द्रुतं कुलूतभर्तुः सुहृदः प्राहिणोद्भृतं।
प्रहृष्टो विप्रकृष्टत्वं देशं गत्वा व्यधत्त तां। परिणीय रणादित्यः शुद्धान्तस्याधिदेवतां।
मर्त्यसंस्पर्शभीरुः सा महादेवी भवन्त्यपि। तं मायया मोहयन्ती न पस्पर्श कदाचन।
व्यधान्मायामयीं गात्रस्पर्शे स्वसदृशीं स्त्रियम्। स्वयमूमरूपा सा निर्जगाम बहिर्निशि।
स्वनाम्ना स्वस्य देव्याश्च कृत्वा परस्परद्वयं। माहेश्वरः शैललिङ्गे कारयामास कारुभिः।
सः प्रतिष्ठाप्रसङ्गेऽथ सज्जे तल्लिङ्गयोर्द्वयं। देशान्तरागतः कश्चित् दूषयामास दैवचित्।
स दृष्टप्रत्ययः सम्यक्तयोर्घटितलिङ्गयोः। सम्यक्खण्डैः समस्तकैरभावे गर्भमाहतम्।
किङ्कर्तव्यतया मूढं प्रतिष्ठाविघ्नविह्वलं। दिव्यदृष्टिः स्वयं देवी ततो राजानमब्रवीत्।
राजन् गिरिसुतोद्वाहे पौरोहित्यपुरा भजन्। सम धर्मदेवमादत्त पूजाभाण्डात् प्रजापतिः।
तां विष्णोः प्रतिमां वीक्ष्य पूजितान्तेन धूर्जटिः। शून्यामिव तदा मेने शक्तिरूपां विना शिवं।
निमन्त्रितैर्दैकितानि रत्नान्यथ सुरासुरैः। पिण्डीकृत्य स्वयं चक्रे त्रिभुवनवन्दितं।
तां विष्णुप्रतिमान्तस्थं लिङ्गं भीशानपूजितं। स्वयं प्रजासृजः पूज्यं कालेनादत्त रावणः।
तेनाप्यभ्यर्च्यमानं तं लङ्कायामभवच्चिरम्। देवद्वयं रावणान्ते नीतमासीच्च वानरैः।
तिर्यक्तया ते कपयो मुग्धा हि मानसौकसः। शान्तोत्सुक्याः शनैर्देवौ न्यधुरन्तर्मानसे।
प्रागेव सरसस्तस्मात् कुशलैः शिल्पिभिर्मया। तावुद्धृतौ प्रातरत्र प्राप्ती द्रक्ष्यस्यसंशयं।
तयोः प्रतिष्ठा क्रियतामित्युक्त्वा पृथिवीभुजं। देवी प्रयाता शुद्धान्तं सिद्धान् सस्मार खेचरान्।
ते ध्यातमात्राः सम्प्राप्ता देव्यादेशेन पावनः। उद्धृत्य नृपतेर्धाम्नि देवौ चरिष्णवो न्यधुः।
दिव्यैः प्रसूनैः संवीतौ हरनारायणौ जनः। प्रातर्नृपस्थाने दृष्ट्वा परं विस्मयमाययौ।
सज्जे प्रतिष्ठालिङ्गेऽथ माहेश्वरतया नृपः। रणेश्वरप्रतिष्ठायां पूर्वं यावत् समुद्यतः।
रणारम्भानुभावेन तावद्देवाद्भुतावहः। स्वयं पीठे रणस्वामी भित्त्वा यन्त्रमुपाविशत्।
॥ युग्मकं ॥ कर्तुं प्रभावविज्ञातां राज्ञा हृष्टधनस्ततः। स स्वयम्भुः स्वयमुल्लासितान् ग्रामानदापयत्।
कुलदासतया ख्यातः सिद्धो ब्रह्माभिधो वशम्। परिज्ञाय तयोर्देव्या प्रतिष्ठाकर्म कारितः।
स दृष्टप्रत्यभिज्ञः सन् प्रतिष्ठाप्य रणेश्वरम्। श्रीमान् ब्रह्मस्वामी प्रतिष्ठां शुद्धमादधे।

अमात्यस्कन्दयम् यत् स स्वयं पाठमवातरत्। इति केषामपि चहि प्रवादोऽद्यापि वर्त्तते।
स ब्रह्मप्रतिमं सिद्धं देवो ब्रह्मविदां वरम्। चकारवत्समुद्दिश्य परार्द्धं मठसत्तमम्।
रणारम्भस्वामिदेवौ दम्पतीभ्यां न्यधीयत। मठः पाशुपतानाञ्च ताभ्यां प्रद्युम्नमूर्द्धनि।
आरोग्यशाला निरपायुक्तावल्लाय रोगिणां। तेन सेनामुखी देवी भयशान्त्यै च कारिता।
ख्यातिं रणपुरस्वामिसंज्ञया सर्वतोगमम्। स सिंहरोत्सिकायामं मार्त्तण्डं प्रत्यपादयत्।
अमृतप्रभया तस्य राज्ञः पत्न्यान्यया कृतः। इचिकविन् रणेशस्य पार्श्वे देवोऽमृतेश्वरः।
मेघवाहनभूभर्त्तृपत्न्या भिन्नाख्यया कृते। विहारेऽपि तया बुद्धबिम्बं साधु निवेशितं।
राज्ञी देव्यनुरक्ताय मातुलोकाय सैकदा। पातालसिद्धिदं मन्त्रं प्रददौ हाटकेश्वरम्।
माभूत्सोढास्य सत्पासिद्धिरिति मत्वा तयार्पितम्। असाधयत् स तत्प्राप्य वसन्तं वत्सरान् बहून्।
कल्हिकापथे कष्टं ततो नन्दिशिलाकृतः। भूरिभिर्वत्सरैर्मन्त्रसिद्धैः प्रणयिना ययौ।
स्वप्नेय सिद्धलिङ्गस्य जातो भक्तुरनिश्चयः। वक्रभागाजलं भित्त्वा समुचेः प्राविशद्दिलं।
विलेऽपावृततां याते दिवसानेकविंशतिं। प्रविश्य पौराम् प्राङ्गिन्ये दैत्यस्त्रीभोगभोगितां।
एत्र स भूपतिर्भूत्वा भुवं वर्षशतत्रयम्। निर्माणख्यातिनिर्व्यूढपातालेश्वरमावहत्।
सानुगे नृपतौ याते दैत्यदयितान्तिकम्। देवी सा वैष्णवीशक्तिः श्वेतद्वीपमगाहत।
राजवंशेष्वनेकेषु राज्ञोर्वंशद्वये परम्। ययोरेवात्र निर्व्यूढिस्पृशा वात्सल्यमागतं।
रणादित्यस्य गोनन्दवंशे रामस्य राघवे। लोकान्तरस्थस्यापि ययोरंशभुजः प्रजाः।
विक्रमाक्रान्तविश्वस्य विक्रमेश्वरकृत्सुतः। तस्यासीद्विक्रमादित्यस्त्रिविक्रमपराक्रमः।
राजा ब्रह्मगलूनाभ्यां सचिवाभ्यां समं मही। सोऽपासीद्राघवसमो द्वाचत्वारिंशतिं समाः।
चक्रे ब्रह्ममठं ब्रह्मा गलूनोऽलूनदुष्कृतः। रत्नावल्याख्यया बध्वा विहारं निरमापयत्।
राज्ञोऽनन्तरजस्तस्य राजाभूत्तदनन्तरम्। तापितारातिभूपालो बालादित्यो बलोर्जितः।
लवणार्णवपानेन तर्षात्कर्षमिवोद्वहन्। यत्प्रतापो रिपुस्त्रीणां सनेत्राम्भोऽभजन्मुखं।
आसन् येऽरिसेनागाधबोधदण्डा इवाहताः। यस्याद्यापि जयस्तम्भाः सन्ति ते पूर्ववारिधौ।
प्रभावाङ्केन वङ्गानां जित्वा येन व्यधीयत। काश्मीरिकनिवासाय कालम्बाख्यो जनाश्रयः।
काश्मीरेषु धनोदयमयहारं द्विजन्मनाम्। राजा मडवराज्ये यो भेडराख्यमकारयत्।
विद्यां विपाटितारिष्टमरिष्टोत्सादने व्यधात्। वल्लभा यस्य बिम्बोष्ठी बिम्बा बिम्बेश्वरं हरम्।
श्रान्तो मन्त्रिणस्तस्य यथा मठगोकथः। खेलाख्य कारका आसन् खङ्खनुप्रमालवाः।
बभूव तस्य भूभर्त्तुर्भुवनाद्भुतविक्रमा। तनयानङ्गलेखाख्या शृङ्गारोदधिकौमुदी।
तां वीक्ष्य लक्षणोपेतां मृगाक्षीं पितुरन्तिके। अमोघप्रत्ययो व्यक्तं व्याहारेति दैववित्।
भविता तव जामाता जगतीभोगभाजनम्। स्वदन्तमेव साम्राज्यं गोनन्दान्वयजन्मनां।
सुतावन्तानशासाज्ञम निच्छन्नथ पार्थिवः। दैवपुरस्कारेण सेतुमासीत् हतोद्यमः।

अराजान्वयिने दत्ता नेयं स्यादवचारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे । ४९०
हेतुं स्वरूपतामात्रं कृत्वा जामातरं नृपः । अथाश्वशालाकायस्थके दुर्लभवर्द्धनम् ।
मातुः कर्कोटनागेन सुप्रतापाः समीयुषा । राज्ञ्यास्यैव हि सञ्जाता राज्ञा ज्ञातापि तेन सा ।
निश्चिन्वाने हि धीमन्या कर्मैवायोग्यमायतात् । जिगीषयैव तत्रैव निदधाति विधिः शुभम् ।
माहात्म्येन जगद्वन्द्यान् विसृज्ञे धूमध्वजे योग्यतां ज्ञात्वा स्वाभिरधिष्ठितं दिनपतिर्धात्वप्रजान्युत्सुकाः ।
दैवं वेत्ति न यः श्रिणो न परतो नामाप्तु तत्सम्भवाः स्वर्दीपा अपि यद्वेन जगतस्तिग्मांशुविस्तारकाः ।
धिया भाग्यानुगामिन्या चेष्टमानो न याचितम् । अभूत् भर्तृस्य चतुरः स तु दुर्लभवर्द्धनः । ४९५
प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रजाम् । कौवीरभाग्यभाग्यस्य जनकैः प्रयुरोऽनयत् ।
पित्रोः प्रेयस्तयोदृत्ता तारुण्यादिमदेन च । राजपुत्री यथावत्तु गणयामास नैव तम् ।
स्वैरिणीसङ्गमो भोगा युवानोऽपि पितुर्गृहम् । पत्युर्दृढत्वमित्यस्याः किनाभूच्छीलविप्लवात् ।
सा नित्यदर्शनाभ्यासाच्छन्नकैर्विज्ञता मनः । अनङ्गलेखा खङ्गेन सम्प्रायुज्यत मन्त्रिणा ।
अकृत्प्रेमसुखाभ्यासनष्टह्रीभीतिसम्भ्रमा । धार्ष्ट्यान्निनाहिनं यान्ती ततस्त्रपतां ययौ । ५००
स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह ।
उपलेभे च जनकैस्तस्यास्तं शीलविप्लवं । विरागलिङ्गैस्तद्बुद्धिर्धीमान् दुर्लभवर्द्धनः ।
सखीमध्ये स्थः सेरा विवर्णा भर्तृदर्शने । अकाण्ड एव प्रोत्साय पश्यन्ती घर्षिते पथः ।
पत्युः कोपे कृतावज्ञा भूनेच चिवुकाञ्चलैः । तदप्रियं भाषमाणे चक्षितं न्यस्तलोचना ।
तत्पुन्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य मन्त्रोभिर्निर्गुदृश्या । ५०५
तत्पुन्ने भग्नकण्ठी तदाश्लेषसशङ्किता । तत्सम्भोगे त्यक्तहर्षा तल्पान्ते व्याजनिद्रिता ।
भर्तृद्विट् प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यमपिशाचावेशचेष्टितं ।
॥ कुलकं ॥ निगूढदारदौरात्म्यचिह्नाकम्पवपुस्ततः । सुप्तामनविशत् ज्ञातुं निशि दुर्लभवर्द्धनः ।
सोऽपश्यत् सुरतक्लान्तिसुखस्वापनिःसहां । दुर्जातमन्त्रिदृष्टेषु प्रत्युप्तामिव वक्षसां ।
स्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्तौ तत्कालमेव निर्वहणं रतेः । ५१०
अन्यस्यापि क्रुधो हेतुं पुनरप्यसमावहां । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ।
प्रजिघांसुः स रोषेण विमर्शेन निवारितः । प्रहर्त्तोः प्रहर्त्तोः निहन्तुं स्वममन्यत ।
ततस्तथाविधः क्षुभ्यत्प्रकोपाविष्टमागरः । विचारवेलया तस्य वलाक्रममनीयत ।
ममसख्ये तत कोऽन्यो गच्छते वधिनाम्बरे । औज्झन्ते येन पथ्याप्ता ईर्ष्याविषविसूचिकाः ।
सोऽचिन्तयद्वो कष्टाश्चेष्टा रागानुगा रमाः । विचारवन्ध्याः क्षिपन्ति क्षिप्रं याभिरधोनराः । ५१५
स्त्रीति नामेन्द्रियार्थोऽयमिन्द्रियार्था यथा परे । तथैव सर्वसामान्या वधिनामच काः क्रुधः ।
निसर्गतरला नारीः को नियन्तयितुं क्षमः । नियमनेन किं मायाध्यस्ता अरणोचितम् ।
यः शुनेरिव कार्यं स्वकार्याभिनिविष्टयोः । रागिणोर्यदि मानः स कोऽवमानस्ततः परः ।

## ॥ अथ चतुर्थस्तरङ्गः ॥



तद्वीतव्यतिरेकमद्रितनयादेहेन सिद्धीभवन्निर्व्यूढमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेण्या भोगिवधूशरीरकुटिलश्यामस्रिया वेष्टिता जूटाहेरपि यत्र भाति दयिता मूर्त्यैव सक्ता तनुः ।
स महीं राजकन्यायाः प्राप्तवानेकतः कुलात् । रक्षानाय सुतानाय राज्यभूद्भाजनं शनैः ।
पतिर्गोपितदौःशील्यात्तुल्यसौभाग्यगौरवा । अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ।
खिङ्खुरेवायुषोऽल्पत्वं दैवज्ञोक्तं विचिन्तयन् । राज्ञः सुतो मल्हणाख्यो मल्हणस्वामिनं व्यधात् ।
पारे विशोककोटाद्रौ प्रदत्तप्रतिपत्तिना । आदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा । ५
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिं । षट्त्रिंशता वत्सराणां स्वाहवासमुपाययौ ।
अनङ्गदेव्यां सम्भूतस्तस्य दुर्लभकः सुतः । शशास वासवसमस्ततो वसुमतीं कृती ।
मातामहस्य यो नाम्ना दौहित्रत्वमयीकृतः । प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ।
सोऽज्ञैरविज्ञात प्राप्तश्रिया चक्रिणा कृता । अग्रहारा हनुमता पुण्या ममनकास्पदा ।
प्रतापतापितारातिः प्रतापपुरपत्तनं । मघवन्नगरस्पर्द्धि दीर्घबाहुर्व्यधत्त सः । १०
नानादिगन्तरायाततत्क्रयिकसंकुले । नोणाभिधोऽवसत्तस्य देशे रौहीतको वणिक् ।
रौहीतदेशे जातानां निवेशाय द्विजन्मनां । महागुणो नोणमठं पुण्यश्रेष्ठं चकार सः ।
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः । अर्चितोऽभवदेकाहमुपचारैर्नृपोचितैः ।
प्रातः सुखासिकां प्रश्ने पृष्टोऽथ पृथिवीभुजा । शीर्षव्यथामकथयत् प्रशान्तां दीपकज्जलैः ।
ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः । वसंस्तदास्पदेऽद्राक्षीत् क्षपायां मणिदीपकान् । १५
विलासितेन लक्ष्म्या च तादृश्या तस्य विस्मितः । अथ द्वित्राण्यहान्यासीत्तथैव स कृतार्हणः ।
एकदा तेन तत्कान्ता विलोक्य ललिताकृतिः । श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना ।
पुरोऽपूर्वकुरङ्गाक्षीदर्शितविभ्रमः । मूर्त्तिमन्मङ्गलं तस्मै वरस्य च गृहस्य च ।
हर्म्यस्य निर्जनतया स निःशङ्कविहारिणी । तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे ।

सापि दर्शितमालीभिः किंचित् साचीकृतानना। अपश्यत् काश्यपीकान्तं श्रोत्रविश्रान्तया दृशा।
प्रागजन्मप्रेमबन्धाद्वा निदेशाद्वा मनोभुवः। सपक्षपातं सा तस्मै दृष्टैव विदधे मनः।
क्षणाद्लब्धसर्वोऽपि तां सौभाग्यसुधामयीं। मज्जानामपि संस्पृश्य स्थितामिव विवेद सः।
ह्रमैस्यसाध्वसभ्रगामी क्षणं भूत्वा जगाम सा। वावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः।
गृहीतहृदयस्तस्याः साकेव महीपतिः। स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ।
तत्र तस्य तदाकारध्यानावस्थितचक्षुषः। समसन्तःपुरप्रीत्या प्रपेदे तानवं तनुः।
अचिन्तयत् स धिक् कष्टं रूढोऽयमशुभावहः। अस्मिन् मे मानसोद्याने रागनामा विषद्रुमः।
अहो नु सुभगा रागशल्पिशिखं विजित्य यः। विवेकादीन् व्यधाद्दूरे सुहृदः परिपन्थकान्।
भाव्यं कौलीनभीतेन येन भूमिभृता सता। तस्य मे दुःसहः कोऽयं सदाचारविपर्य्ययः।
यत्र दारापहरणं राजैव कुरुते स्वयं। परः को नाम तत्रास्तु शमिता नीत्यतिक्रमे।
विमृश्यन्निति भूपालो विस्मर्तुमभवत् क्षमः। न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनां।
तमथ प्रथितास्वस्थं मदीयासरणं वणिक्। स जनाऽज्ञातवृत्तान्तः सुजनो विजनेऽब्रवीत्।
इमामवस्थां प्राप्तोऽसि किं धर्म्मेण निरुध्यसे। न प्राणसंशये जन्तोरकृत्यं नाम किंचन।
यस्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्म्मसंश्रये। तेषामपीदृशे कृत्ये श्रूयते संयमव्ययः।
यशोऽनुरोधाद्विषं नापि देवमुपेक्षितुं। स्वकीर्त्तिरेव परा ध्रुवा कार्य्यकर्णरसायना।
माभूस्मदनुरोधस्ते त्वत्प्रियार्थं हि पार्थिव। प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा।
एवमुक्तोऽपि साधुः स ताश्चेत्सत सा सुरास्पदान्। गृहीतां नर्त्तकी भूत्वा नृत्यशाल्यामयापिता
तेनेति प्रेर्य्यमाणः स बलिना च मनोभुवा। प्राक्तन्यामथ जग्राह कथञ्चित्तां सुलोचनां।
कृत्यैरुदात्तैः शापास्तताद्दूरक्पारिव्यसाधवा। नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरं।
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतं। प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी।
तस्याभिजनमालिन्यं स्वच्छैरच्छेदि तद्गुणैः। शाणाश्मककलैः कार्ष्ण्यमाकरोत्थं मणेरिव।
धूमाद्राक्षमलीमसात्कुलिशपथः स्फुटे घनस्योद्गमो लोहस्याति सितस्य जातिरचलात् कुण्ठाश्ममालामयात्।
कियाज्ज्वलजडाज्जलाद्युतिमतो ज्वालाध्वजस्योद्भवो जन्मावश्यनुकारिणो न महतां सत्यं स्वभावाः क्वचित्।
तारापीडोऽपि तनयः क्रमात्तस्यामजायत। अविमुक्तापीडनामा मुक्तापीडोऽपि भूपतेः।
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः। प्रतापादित्यजाः ख्यातास्चन्द्रापीडादयोऽपि ते।
वर्षान् पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः। पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः।
राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोऽभवत्। पीडितेन्दुत्विषा कीर्त्या कलेः पीडाञ्चकार यः।
एकपादाश्रितो धर्म्मः समस्थेवोज्झितो नृपैः। प्रबुद्धैः कृतकाले येन पादैः संयोजितस्त्रिभिः।
यं क्षमाविक्रममुख्याः परस्परविरोधिनः। सिषेविरे गुणास्तुल्यं दिक्षोपासमिवर्त्तवः।
स्थाने स्थाने यदीया श्रीस्तुल्यमाप्यायनप्रभून्। समानुगामकुल्येव निखिलाननुजीविनः।

दोषांस्त्यक्त्वान्यभूपेषु यं दृष्ट्वा शोरविक्षिपत् । मार्गाद्रिरोधकाकुत्स्थं क्षिप्रा सिन्धुरिवार्णवं ।
कार्य्यज्ञो यो मतस्त्यक्त यत्फलीभूतविग्रधीः । परं समाचरत् स्तुत्यं स्तूयमानत्रपां दधे ।
व्यनीयत नयोऽमात्यैर्विनयं तान् व्यशिक्षयत् । वत्सं न भिद्यते कैश्चित्कमन्यान् मणीस्तु तत् ।
यस्य धर्म्मभयादासीत् मंत्राज्ञा धर्म्मसंशये । निजोऽपि पक्षः कुलिशपाशादिव गरुत्मता ।
न्यायं दर्शयता वर्त्म तेन राज्ञा प्रवर्त्तिताः । स्थितयो वीतसन्देहा भास्वतेव दिनक्रियाः ।
नियन्त्रिता यद्गुणितिरस्कृतोदीरणादियं । अतिप्रसङ्गभङ्गात्तकेवलावाप्तिरतः पुनः ।
तस्य त्रिभुवनस्वामिप्रासादारम्भकर्म्मणि । चर्म्मकृत् कोऽपि न प्रादात् कुटीं सैकोपयोगिनीं ।
प्रश्नप्रतिश्रुतार्थानां नव कर्म्माधिकारिणां । नैसर्गिकपदग्रस्तः सूत्रपातं न चक्षमे ।
विज्ञापितोऽथ तैरेत्य तमर्थं पृथिवीपतिः । नागेव सागसो मेने चर्म्मकारं न तं पुनः ।
सोऽभ्यधात्तान् धिगेतेषामप्रेक्षापूर्व्वकारितां । प्रागेव येर पृष्ट्वा तं प्रविष्टं नवकर्म्मणि ।
नियम्यतां विनिर्म्माणं यद्वान्यत्र विधीयतां । परभूम्यपहारेण सुकृतं कः कलङ्कयेत् ।
ये द्रष्टारः सदसतां ते धर्म्मविगुणाः क्रियाः । वयमेव विदध्मश्चेद्यातु न्यायेन कोऽधुना ।
इत्युक्तवति भूपाले सेवितो मन्त्रिपर्षदा । पार्श्वात् पादूकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत् ।
इच्छति स्वामिनं द्रष्टुं स च मूले न चक्रम । युक्तः प्रवेश आस्थाने वाह्यास्थावसरेऽस्तु तत् ।
अन्येद्युरथ भूपेन स वहिर्दत्तदर्शनः । पृथक्कर्म्मणि नो विघ्नः किं त्वमेवेत्यपृच्छत ।
प्रतिभाति गृहं तच्चेद्रम्यं नव ततोऽधिकं । तदर्थितां धनं वापि भूय्यैव चाभ्यधीयत ।
तूष्णीं स्थितं ततो भूपं चर्म्मकारो व्यजिज्ञपत् । दन्तांशुस्वैरसन्तमसमानं स्नातुमिवोद्यतः ।
राजन् विज्ञाप्यते कश्चिद्यदस्माभिर्यथाश्रयं । न स्थेयमवलित्वेन तच्च द्रष्टा सता त्वया ।
नाहमूनः शुनो नास्मि काकुत्स्थात् पार्थिवः पृथुः । कुम्भसीवाद्य तत्सभ्याः संलापेऽस्मिन् किमावयोः ।
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः । अहन्ताममताख्याभ्यां शृङ्खलाभ्यामेव बध्यते ।
कङ्कणाङ्गदहारादिशोभिनां भवतां यथा । निष्किञ्चनानामस्माकं स्वदेहेऽहंक्रियः तथा ।
देवस्य राजधानीयं यादृशी सौम्यहारिणी । कुटीघटमुखानद्धगवाक्षा तादृशी मम ।
आजन्मना साक्षिणीयं मातेव सुखदुःखयोः । मठिका लोभ्यमानाद्य नेक्षितुं शक्यते मया ।
नृणां यद्वेश्महरणे दुःखमाख्यातुमीश्वरः । तद्विमानच्युतोऽमर्त्यो राज्यभ्रष्टोऽथ पार्थिवः ।
एवमप्येत्य मद्वेश्म मार्गहेत्र न याच्यते । सदाचारानुरोधेन दातुं तदुचितं मम ।
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदं । कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनां ।
अथो चर्म्मकारस्तं तत्र व्यञ्जिताञ्जलिः । राजन् धर्म्मानुरोधेन परवत्ता तवोचिता ।
अविरोधेन धर्म्मेण पाण्डुसूनोः पुरा यथा । धार्म्मिकत्वं तथा तेऽद्य मया स्पष्टेन वीक्षितं ।
स्वस्ति तुभ्यं चिरं स्थेया धर्म्मा इत्यात्मपद्धतीः । दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्म्मचारिणां ॥
एव निष्कल्मषाचारः स चक्रे पार्थिवो भुवं । राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया ।

अन्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः । प्रकाशिका विहारस्य तत्पत्नी कारयिष्यभूत् । ८०
गुणैर्मिहिरदत्ताख्यस्तस्योदात्तगुणोऽभवत् । विषयस्य गम्भीरस्वामिनाम्नो विधायकः ।
धर्माधिकरणैश्वर्याच्छन्ना चकुलिकाभिधः । नगराधिकृतस्तस्य कलितस्वामिनं व्यधात् ।
कदाचन सभासीनं दृष्ट्वा धर्माधिकारिभिः । प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत् ।
त्वयि प्रशासति महीमस्यां गर्भानिवर्हणे । सुखसुप्तस्य मे पत्युर्हृतं केनापि जीवितं ।
एषैव महती लज्जा सदाचारस्य भूपतेः । यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः ८५
कलिकालबलात्तेजस्वाद्यैरपि दृश्यते । पापात् पापतरे ऽमुष्मिन्दोषे कथमुदास्यते ।
चिन्तयन्त्यपि नावैमि भर्तुः कञ्चिद्विरोधिनं । निर्दोषस्य हि तस्यासन् सर्व्वतः प्रीतया द्विजः ।
अनसूयो निरुत्सेकः प्रियवाग्गुणवत्सलः । पूर्व्वाभिभाषी निर्लोभो न विद्वेषो हि कस्यचित् ।
तस्य तुल्यवया बाल्यात् प्रभृत्यध्ययने ऽश्रमः । मान्त्रिकस्वामिवास्तव्यो विप्रः ब्रह्माऽभिचारवित् ।
गुणदारिद्र्यनिर्निद्रैः क्षुद्रैः कोमलशालिनां । प्रसिद्धिस्पृहया बन्ध्यैर्धीध्वंसेऽसूययासवः । ९०
नापुंस्त्वलोभ्या दुःशीलो नाद्रोहो नित्यशङ्कितः । नावाचालो मृषाभाषी नाकायस्थः कृतघ्नधीः ।
नादाहज्वरजो लुब्धो नानीर्ष्यो नित्यदुःखितः । नास्त्रीजितः सर्व्वदासो नाब्रह्मः स्निग्धभाषितः ।
नानन्त्यजः पितृद्रोही नारागी निरपत्रपः । नाशुद्रविद्यः पापीयानिति भूतार्थसंग्रहः ।
तिलकं । इत्युक्तवत्यां ब्राह्मण्यां तत्कष्टातमति द्विजं । आनीय परिशुध्य स्वेत्यस्यधाद्वसुधाधिपः ।
भूयो ब्राह्मण्यवादीत्तं स्वामः स्वातोद्विषया । निःसम्भ्रमः साधयितुं देव दिव्यक्रियामयं । ९५
न्यायदक्षरवावादीत्ततस्तं मेदिनीपतिः । अदृष्टदोषे किं कुर्म्मो वयमत्राधिकारिणः ।
नान्यस्मिन्नपि दण्डस्य प्रसङ्गो निश्चितागसि । किं पुनर्ब्राह्मणो दण्ड्यो यो दोषेऽपि वधं विना ।
उक्त्वेति विरते तस्मिन् द्विजजायाब्रवीत् पुनः । पततः क्षणदाः क्षीणराजन्यपि न मस्यते ।
नान्यं परिणेतारं सन्तुः प्रतिचिकीर्षया । तथाविहितदण्डेऽस्मिंस्त्यजाम्यसमसूनहम् ।
तथा स्थितायां ब्राह्मण्यां कृतप्रायोपवेशनः । स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोऽभवत् । १००
चिरात्तापोषितं तत्र राजानं रजनीक्षये । स्वप्ने स्वप्नेशमोऽवोचत् सत्याङ्कं सत्यवाहनः ।
ईदृङ् युज्यते राजन् सत्यस्यान्वेषणं कलौ । निशीथे कस्य सामर्थ्यं कर्तुं दिवि विकर्त्तनं ।
भवत्कर्त्त्यनुरोधेन मत्कृतेन प्रवर्त्तते । मत्प्रासादाङ्गनेऽमुष्मिन् शालिचूर्णं विकीर्यतां ।
प्रदक्षिणं कुर्व्वतोऽस्य चिरत्र यदि दृश्यते । मन्त्रवत्यापादमुद्रा पादमुद्रानुयायिनी ।
तदेष वधको भूत्वा सदृशं दण्डमर्हति । राजा विधिः कार्यो दिने पापघ्नदर्शना । १०५
अथ तत्कारयित्वा स दृष्टदोषे द्विजन्मनि । दण्डं दण्डधरस्तक्रे द्विजत्वाद्वधवर्जितं ।
महीमघोना भर्त्सिते तस्मिन् विहितशासने । ततो द्विजजाया सा कृताशीरभ्यधादिदं ।
इयत्यपनिसर्गे गूढपापानुशासनं । कार्त्तवीर्यस्य वा दृष्टं तव वा पृथिवीपते ।
दण्डधारे त्वयि क्ष्मां चिरमेतां प्रशासति । को वैरशत्रयोः पारमनायासादवीदति ।

इत्थं कृतयुगस्येव वैधेयैर्बहुवस्तुभिः। स्वल्पोऽपि राज्यकालोऽस्य पर्याप्तैः पर्यपूर्यत।
दुर्बुद्धिस्तु परापायोपसंसर्गेण निर्गलः। निविडं जडिमा जाने सत्यमस्य धियि सन्निधिं।
विभक्तवर्णशोभस्य तथाभावान्यथा कथं। माहेन्द्रस्येव धनुषो विदधे गुणलुप्ततां।
कारयित्वाभिचारं तं नियन्तोपहतं द्विजं। तं यमः सेवनामोघं तारापीडोऽनुजोऽनयत्।
दुष्कर्मदुर्भगान् भोक्तुं भोगान् पापगुणोन्नतं। स्पृशन्ति कण्टकान् प्राप्तं करभा इव केतकं।
ततः प्रभृति भूपानां राज्येच्छूनां गुरून् प्रति। दृष्टाः प्रवृत्ता राज्येऽस्मिन्नभिचारादिकाः क्रियाः।
श्रीचन्द्रापीडदेवस्य तत्क्षमित्वमपश्चिमं। संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः।
मुमूर्षयन् स लब्ध्वापि तं कृत्याध्यायिनं द्विजं। वराकेऽन्यप्रयुक्तेऽस्मिन् को दोष इति नावधीत्।
विस्मृतः स कृतज्ञानृपपंक्तिमध्येऽत्र वेधसा। दत्त्वा कार्त्स्न्यपदं न्यूनं न्यस्तः कलिनृपावलौ।
अष्टौ वर्षान् साष्टमासाननुष्ठायेति मेदिनीं। प्रविवेश वशी स्वर्गमनिशञ्च सतां मनः।
भ्रातृद्रोहासमृद्धदा प्रतापेन भयावहः। उवाह तारापीडः स चण्डः क्ष्मामण्डलं ततः।
पूर्णपात्रप्रतिभटं द्विषां लुण्ठयता यशः। शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्त्तिताः।
तस्यानिदुष्टदिष्टस्य लक्ष्मीर्दीप्तापि सर्वतः। अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः।
सन्नेव प्रभावसान्निध्यं देवानां क्रियते द्विजैः। मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजत्।
मासं षड्भिर्दिनैरूनं चतस्रश्च समा भुवि। स प्राभवद्गुरुद्रोहप्ररोहत्सुकृतात्ययः।
अथाकृष्टाभिचारेण विशितायुः स्वयो द्विजैः। स भ्रातृसदृशीं शान्तिं प्रपेदे न पुनर्गतिं।
योऽयं परापकरणाय सृजत्युपायं तेनैव तस्य नियमेन भवेद्विनाशः।
धूमं प्रसौति नयनान्धकरस्य योऽग्निर्भूत्वाम्बुदः स शमयेत् सलिलैस्तमेव।
राजा श्रीललितादित्यः सार्वभौमस्ततोऽभवत्। प्रादेशिकेश्वरस्रष्टुर्विधेर्बुद्धेरगोचरः।
प्रतापांशुच्छटाकूटैः पटवासमधर्षिभिः। जम्बुद्वीपद्विजेन्द्रस्य येनातन्यत मण्डनं।
तथाञ्जलिषु बद्धेषु राजभिर्विजयोद्यमे। पार्थिवः पृथुविक्रान्तिर्युधि कोपं मुमोच यः।
विनिःसरज्जनतया भयाद्गर्भानिवामुचन्। द्विषां वसतयो यस्य निशम्यास्कन्ददुन्दुभिं।
विलोलतिलकान्तैर्यः सनेत्राम्भोभिराननैः। निवापाञ्जलिदानानि द्विषां नारीरकारयत्।
क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः। जिगीषोः प्रायशस्तस्य यात्रास्वेव वयो ययौ।
करं पूर्वदिशो गृह्णन् प्रतापानलसन्निधौ। अन्तर्वेद्यां महाराजः स्वकीर्त्यूर्णावभृद्भौ।
कन्यानां यत्र कुब्जत्वं व्यधाद्गाधिपुरे मरुत्। तत्रैव शंसनीयः स पुमांश्चक्रे भयस्पृशां।
यशोवर्माद्रिवाहिन्याः क्षणात् कुर्वन् विशोषणं। नृपतिर्ललितादित्यः प्रतापादित्यतां ययौ।
मतिमान् कान्यकुब्जेन्द्रः प्रत्यभात् कृतवेदिनां। दीप्तं यल्ललितादित्यं पृष्ठं दत्त्वा न्यषेवत।
तत्सहायास्ततोऽप्यासन्निकाममभिमानिनः। कुसुमाकरतोऽप्युच्चैः सुरभिश्चन्दनानिलः।
श्रीयशोवर्मणः सन्धौ सान्धिविग्रहिकोऽभयत्। न संनियमनालेख्ये मित्रशर्माख्य चक्षमे।
सोऽभूत् सन्धिर्यशोवर्मललितादित्ययोरिति। निर्विवेकादिनिर्देशादनधत्त विदन् प्रभोः।

॥ युगलकं ॥ सुदीर्घविग्रहायासैः सेनानीभिरदूषितां । औचित्यापेक्षितां तस्य क्षितिपक्रममन्यत ।
प्रीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः । यशोवर्म्मनृपं तञ्च समूलमुदपाटयत् ।
अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवैः । कर्म्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ।
महाप्रतीहारपीडा स महासन्धिविग्रहः । महाश्वशालापि महाभाण्डागारश्च पञ्चमः ।
महासाधनभागश्चेत्येता यैरभिधाः श्रिताः । शाहिमुख्या येष्वभवन्नध्यक्षाः पृथिवीभुजः ।
कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्म्मा तद्गुणस्तुतिवन्दितां ।
किमन्यत् कान्यकुब्जोर्व्वी यमुनापारतोऽस्य सा । अभूदाकालिकातीरं गृहप्राङ्गणवद्वशे ।
यशोवर्म्माणमुत्खाय हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्व्वसागरं ।
पश्यन्निर्जन्मवसुधां सेव्याधोरणमस्थितैः । तस्यातङ्कैः कलिङ्गेभ्यः कथञ्चित् प्रस्थितं पथि ।
आहूयमानापर्य्यन्ताद्विन्ध्यादिवागताः । अभिमयंस्तं निःशेषाद्भिन्नो गौडमण्डलात् ।
कटकेभघटाहस्ततलवीचिकचग्रहः । अनुयातागस्त्यस्य गृहीतः पूर्व्ववारिधिः ।
वनराजिश्यामलेन दिशं वैवस्वताङ्कितां । स प्रतस्थेऽब्धितीरेण तत्कृपाणेन तु द्विषः ।
तस्याङ्कजुटाः कर्णाटाः कृतप्रणतयोऽनयन् । सुवर्णकेतकीव्यक्ता प्रतापसवतंसतां ।
तस्मिन् प्रसङ्गे रट्टाख्या कर्णाटी चटुलेक्षणा । अपासीन्नृपतिर्भूत्वा प्रभुश्रीर्दक्षिणापथं ।
विन्ध्याद्रिमार्गाः पर्य्याप्ता निष्पर्य्यन्तप्रभावया । दुर्गयेव तया देव्या कृता निहतकण्टकाः ।
ललितादित्यपादाब्जनखदर्पणमण्डले । स्वमूर्त्तिं वीक्ष्य संक्रान्तां प्रणता सापि पिप्रिये ।
तालीतरुतलासन्ननारिकेलरसोर्म्मयः । कावेरीतीरपवनैस्तद्योधाः श्रममत्यजन् ।
चन्दनाद्रेस्तदास्कन्दत्रासभ्रश्यदहिच्छलात् । श्रीखण्डद्रुमदोःखण्डा मण्डलाग्रा इवापतन् ।
उत्तरागमिव पदं क्षिप्ता द्वीपेष्वविघ्नतः । स कुल्याया इवाम्भोधेः क्षिप्रं चक्रे गतागतं ।
ततोऽब्धिवीचिनिर्घोषैरुद्गीतजयमङ्गलः । प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ।
आक्रम्य क्रमुकान् सप्त कोङ्कणान् सप्त तापयन् । तुरगानिव तिग्मांशुः प्रतापस्तस्य पप्रथे ।
पश्चिमाब्धेर्मरुद्धूतवीचीराविर्भवच्छ्रमत् । द्वारका तस्य सैन्यानां प्रवेशौत्सुक्यदायिनी ।
विन्ध्याद्रिस्खलदुत्थधातुरेणुहृताम्बरः । प्रत्यभात्स्वकमर्य्यादः कोपनाश इवोत्थमन् ।
विशतां दशनश्रेण्यस्तस्यावन्तिषु दन्तिनां । महाकालकिरीटेन्दुज्योत्स्नया खण्डिताः परं ।
सर्व्वतो दिश्यमालोक्य जितप्रायांस्ततो नृपान् । स प्राविशत् सुक्त्रिसीमपथेनोत्तरापथं ।
राजभिस्तस्य तत्रोग्रैः संग्रामोऽभूत् पदे पदे । कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदाद्यमस्पृशः ।
काम्बोजानां वाजिशाला आयन्ते स्म ययोज्झिताः । ध्वान्तस्थलास्तदिरुद्धैर्निरुद्धा महिषैरिव ।
भुःखाराः शिखरश्रेणीर्यान्तः सन्दश्य वाजिनः । कुच्छ्भावन्दलत्कण्ठां निन्युर्दृष्ट्वा हयाननां ।
भौन्वारान् समरे जित्वा जितं तेने स दुस्तरं । सकृज्जयमरेर्व्वीरा मन्यन्ते हि तृणाकरं ।
चिन्ता न दृष्टा भौट्टानां वक्त्रे प्रकृतिपाण्डुरे । वनौकसामिव क्रोधाः स्वभावकपिले मुखे ।

तस्य प्रतापोदग्रदो न सेहेऽमारतं मधु। हरीणामोषधिज्योतिः प्रत्यूषाऽर्क इवोदितः।
कस्तूरीमृगसंस्पर्शे धूतकुङ्कुमकेसरः। सैन्यसीमन्तिनीस्तस्य ससीत्कारोत्तरानिलः।
शून्ये प्राग्ज्योतिषपुरे निर्निद्रानं ददर्श सः। धूपधूमं वनप्लुष्टात् कालागुरुवनात् परं।
मरीचिकाविनीर्णार्णोविभ्रमे वालुकाम्बुधौ। तद्गजेन्द्रा महाराजममूढमतो ययुः।
तद्योधान् विगलद्धैर्यान् स्त्रीराज्ये स्त्रीजनोऽकरोत्। तुङ्गौ स्तनौ पुरस्कृत्य न तु कुम्भौ कराटिनां।
स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियां। संत्रासमभिलाषं वा निश्चिकाय न कश्चन।
उत्तराकुरवोऽविक्षंस्तद्भयाज्जन्मपादपान्। उरगान्तकसंत्रासाद्बिलानीव महोरगाः।
जयार्जितधनः सोऽथ प्रविवेश स्वमण्डलं। भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलं।
जालन्धरं लोहरञ्च मण्डलानीतराणि च। प्रसादीकृत्य विदधे राजत्वं सोऽनुजीविनां।
पराजयव्यञ्जनार्थं नामलिङ्गानि पार्थिवाः। उग्रेण धारितास्तेन वहन्त्यद्यापि निर्भराः।
बन्धमुद्राभिधानाय पश्चाद्बाहू तदाज्ञया। तुरुष्का दधते व्यक्तं मूर्द्धानं चार्द्धमुण्डितं।
क्षितिभृद्दाक्षिणात्यानां तिर्यक्त्वज्ञापनाय सः। पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि।
न तत्पुरं न स ग्रामो न सा सिन्धुर्न सोऽर्णवः। न स द्वीपोऽस्ति यत्रासौ प्रतिष्ठां न विनिर्ममे।
क्वचिच्चेष्टामनुचितं क्वचित् स समयानुगं। वाक्येन प्रतिष्ठानां स मार्गे नाम सन्दधे।
सुनिश्चितपुरं चक्रे दिग्जये कृतनिश्चयः। सगर्वो दर्पितपुरं कृतवान् कृतकेशवं।
फलं गृह्णन् फलपुरं पर्णोत्सं पर्णमाददत्। क्रीडारामविहारञ्च क्रीडन् राजा विनिर्ममे।
एकमूर्द्धं नयद्ब्रह्ममधः कर्षत्तथापरं। बुद्ध्वा व्यधान्निरालम्बं स्त्रीराज्ये नृहरिञ्च सः।
दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्मिकृत् किल। पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत्।
ललिताख्ये पुरे तस्मिन्नादित्याय स भूपतिः। सग्रामां कान्यकुब्जोर्वीमभिमानोर्जितो ददौ।
तेन हुष्कपुरे श्रीमान् मुक्तस्वामी व्यधीयत। बृहद्विहारो भूपेन सस्तूपश्च महात्मना।
एकां कोटिं गृहीत्वा स दिग्जयाय विनिर्गतः। भूतेशाय ददौ शुद्ध्यै कोटीरेकादशागतः।
स तत्र ज्येष्ठरुद्रस्य शिलाप्रासादयोजनं। भूमिग्रामप्रदानञ्च विदधे वसुधाधिपः।
चक्रे चक्रधरे तेन वितस्ताम्भःप्रतारणं। विनिर्म्मायारघट्टालीस्तांस्तान् ग्रामान् प्रयच्छता।
सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च। मार्त्तण्डस्याद्भुतं दाता द्राक्षास्फीतञ्च पत्तनं।
लोकपुण्ये पुरं कृत्वा नानोपकरणावलीं। प्रतिपादितवान् जिष्णुग्रामैः सार्कं स विष्णवे।
ततः परं परीहासशीलो भूलोकवासवः। विहसद्वासवावासं परिहासपुरं व्यधात्।
विरेजे राजतो देवः श्रीपरिहासकेशवः। क्षिप्तरत्नाकरस्यापि मुक्ताज्योतिर्भरैरिव।
नाभीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः। अचकात् काञ्चनमयः श्रीमुक्ताकेशवो हरिः।
महावराहः शुशुभे काञ्चनं कवचं दधत्। पाताले तिमिरं हन्तुं वहन्निव रविप्रभाः।
गोवर्द्धनधरो देवो राजतस्तेन कारितः। यो गोकुलपयःपूरैरिव पाण्डुरतां दधे।

चतुष्पञ्चाशतं हस्तानुद्गोपयित्वा महाशिलां । ध्वजाग्रे दितिजारातेस्तार्क्ष्यस्तेन निवेशितः ।
चक्रे बृहच्चतुःशाला बृहच्चैत्यबृहज्जिनैः । राजा राजविहारं स विरजाः सततोर्ज्जितं ।
तोलकानां सहस्राणि चतुर्भिरधिकानि सः । अशीतिं निदधे हेम्नो मुक्ताकेशवविग्रहे
तावन्त्येव सहस्राणि पलानां रजतस्य च । सम्भाय शुङ्गभोक्तृकं श्रीपरीहासकेशवं ।
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः । व्योमव्यापिवपुः श्रीमान् बृहद्बुद्धो व्यधीयत ।
चतुःशालां च चैत्यञ्च तावता तावता व्यधात् । धनैर्नैवेति तस्यासन् पञ्च निश्चितयः समाः ।
राजतान् क्वापि सौवर्णान् क्वापि देवान् विनिर्ममे । पार्श्वेषु मुख्यदेवानां पार्थिवो धनदोपमः ।
कियन्ति तत्र रत्नानि ग्रामान् परिकरं तथा । स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ।
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः । तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ।
राज्ञी कमलवत्यस्य कमलाहङ्कारिणी । राजतं विपुलाकारं कमलाकेशवं व्यधात् ।
अमात्यो मित्रशर्म्मापि चक्रे मित्रेश्वरं हरं । श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ।
श्रीमान् कय्यविहारोऽपि तेनैव विदधेऽद्भुतः । भिक्षुः सर्व्वज्ञमित्रोऽभूत् क्रमाद्यत्र जिनोपमः ।
तुःखारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत् । भूपचित्तोन्नतं स्तूपं जिनान् हेममयांस्तथा ।
ईशानदेव्या तत्पत्न्या खातास्तु प्रतिपादितं । सुधारसमिव स्वच्छमारोग्याशयि रोगिणां ।
ललितादित्यभूभर्त्तुर्व्वैद्यो भाश्चक्रमर्द्दिका । सहस्राण्याकंधा सप्त तत्र चक्रपुरं व्यधात् ।
आचार्य्यो भप्पटो नाम विदधे भप्पटेश्वरं । अन्येऽपि कर्कटप्राद्या बहवो बहुभिः कृताः ।
अधिष्ठानान्तरेऽप्यत्र चङ्कुणेनाथ्यमन्त्रिणा । स चैत्यः सुकृतोदारो विहारो निरमीयत ।
भिषग्गीशानचन्द्राख्यः श्यालश्चङ्कुणमन्त्रिणः । विहारमकरोल्लब्धा तक्षकानुग्रहाच्छ्रियं ।
एवं हेममयीमुर्व्वीं स कुर्व्वन्नुर्व्वरापतिः । गुणैरौदार्य्यशौर्य्याद्यैर्यशःप्रासमलङ्घयत् ।
हेलयापि विनिर्य्यान्ती वक्त्रादस्य महीपतेः । न कदाचन तस्याज्ञा दैवेरप्युदलङ्घ्यत ।
तथाहि पूर्व्वपाथोधेस्तटे सकटको वसन् । आनीयन्तां कपित्थानीत्यादिदेश स जातुचित् ।
किङ्कर्त्तव्यतयान्येषु पुरोगेषु स्थितेष्वथ । उपानयत् कपित्थानि दिव्यः कोऽपि पुमान् पुरः ।
अयादुपायनं ग्रहन् कृतसंज्ञो भुवा प्रभोः । कस्त्वमिति पप्रच्छ प्रतीहारः प्रणत्य तं ।
सोऽभ्यधात्तं कपित्थानि दत्वा राज्ञः प्रियाप्तरं । प्रहितोऽद्य महेन्द्रेण नन्दनोद्यानपालकः ।
रहोमहेन्द्रसंदिष्टं वक्तव्यं किञ्चिदस्ति मे । इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्जनां ।
ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते । क्षन्तव्यं पथ्यमप्येतत् सौजन्यान्निष्ठुरं वचः ।
तुर्य्ये युगेऽपि भूपाल दिक्पाला अपि ते वयं । विस्मिता यत् प्रणम्याज्ञां श्रूयतां तत्र कारणं ।
पुरा ग्रामे स्थलस्थस्य कस्यचित् पृथुसम्पदः । अभ्यन्तरे कर्म्मकरो हालिकोऽभूद्भवान् किल ।
एकदा तस्य ते सीरं वाहयित्वा महावृषान् । श्रान्तस्य निर्जलेऽरण्ये क्षीणप्रायमभूद्वपुः ।
ततः स्वामिगृहात् क्षुत्तृट्खिन्नस्य भवतोऽन्तिकं । वारिकुम्भोदपूपञ्च गृहीत्वा कश्चिदाययौ ।

निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः। विप्रं कण्ठगतप्राणमपश्यः पुरतोऽतिथिं।
स क्षामवोचन्मां भुङ्क्ष्व दुर्भिक्षोपहतस्य मे। कण्ठे स्थितास्तवः प्राणा वर्षस्ते भोजनं विना। २१०
वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्व्वकं। पूपार्द्धं वारिकुम्भीं च प्रादाः प्रियमुदीरयन्।
पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते। अखण्डितानामाज्ञानां शतमासीन्निविष्टये।
तेन वारिप्रदानेन वाञ्छामात्रेऽपि दर्शिते। प्रादुर्भवन्ति सुस्वादा नद्यो मरुपथेष्वपि।
मन्त्रेऽत्रप्रतिपादितः प्रियवचोबद्धालवालावलिर्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः।
दातुस्तत्तदभीप्सितं किल फलन् कालेऽतिबालोऽप्यसौ राजन् दानमहीरुहो विजयते कल्पद्रुमादीनपि।
अन्यात्रशेषास्तास्त्वद्य मन्त्र्याज्ञास्तत्र भूपते। वर्षोत्कर्षं तपत्येष यत्र तत्राविचारतः। २१५
अपि चेतसि भूपाल सुलभं महतः सतः। कस्मादिवाग्रपूज्यत्वं तथापि हृदि रोहति।
दिनानि कतिचिद्यानि कश्मीरेषु घनागमे। जायन्ते तानि पूर्वाभ्यो फलानि शिशिरे कुतः।
विगाहसे दिशं यां यां तत्र तत्रैव तत्पतेः। त्वदाज्ञापालने यत्नः पूर्व्वदानप्रभावतः।
आज्ञां शिरस्य माहेन्द्रीमाज्ञा स्वल्पापि तेऽधुना। यत्नेन कथमप्येषा शक्रेणाभयशङ्किना।
विना प्रयोजनं मुख्यं तस्मादाज्ञा त्वया क्वचित्। नैवमेव पुनर्देया विरताः सन्ति ता यतः। २२०
इत्युक्त्वान्तर्हिते तस्मिन् भूपालो विस्मिताशयः। चिन्तयन् दानमाहात्म्यं परं विस्मयमाययौ।
ततः प्रभृति तादृक्संयोग्यार्थप्राप्तिलालसः। परिहासपुरे चक्रे स्थिरां गुर्व्वीं सपर्व्विणीं।
सहस्रभक्तमित्येवं प्रख्यातायां सदक्षिणं। लक्षमेकाधिकं भक्तपात्राणां यत्र दीयते।
अभिप्रायेण तेनैव पञ्चमान्यूषरेषु सः। चक्रे यथेषु तृष्णार्त्तः कश्चिन्नातु पिबेदपः।
सञ्चार्य स देशेभ्यस्तांस्तानन्तरविज्ञताम्। विकचान् सुमनस्तोमान् पादपेभ्यश्चानिलः। २२५
तेन कङ्कणवर्षस्य रसमिद्धस्य सोदरः। चङ्कुणो नाम भूखारदेशानीतो गुणाकरः।
सरसेन समानत्वन् केशो बहुसुवर्णतां। पद्माकर इवाज्ञस्य भस्मतोऽभ्युत्कभावहः।
रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसङ्गमैः। तटे स्तम्भितसैन्योऽभूद्राजा चिन्तापरः क्षणं।
ततोऽम्बुतरणोपायं तस्मिन् पृच्छति मन्त्रिणः। अगाधेऽम्भसि रोधस्थश्चङ्कुणो मणिमक्षिपत्।
तत्प्रभावाद् द्विधाभूतं सरित्तोयं ससैनिकः। उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत्। २३०
मणिमन्येन मणिना चङ्कुणोऽप्याचकर्ष तं। सलिलं प्राग्वत्तच्च क्षणेन सरितामभूत्।
परिभाव्याद्भुतं तस्य प्रशंसामुक्तराननः। प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत।
स तमाह स्म विहसन् कर्म्मिणौ कुरुतां मणी। योग्यौ मत्पार्श्वगावेव किं स्यात् स्वीकरणेन वः।
सामान्येनैव लभते सोत्कर्षं वस्तु सम्प्रथां। सहस्रं तस्य का शोभा विविधोत्कृष्टवस्तुषु।
प्रस्यन्दनं शशिमणेर्गलयन्ति तावद्यावत् स्थिता जलनिधेः पुलिनैकदेशे।
स स्वीक्रियेत यदि तेन ततस्तदास्य स्यन्दः स्फुरन्नपि न तत्सलिलैर्विभाव्यः। २३५
इत्युक्त्वा विरते तस्मिन् राजा स्मितमब्रवीत्। संभावयसि किं रत्नमाभ्यामभ्यधिकं मम।

ततोऽधिकतरं यदा कोषात्थं मम पश्यसि । तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयं ।
ततो महान् प्रमादोऽयमित्युक्त्वा चङ्कुणोऽब्रवीत् । ख्यायन्ते स्वामिनो रत्ने मत्प्रमिष्टं प्रदीयतां ।
गजस्कन्धेऽधिरोप्यैतस्मात्मागधेभ्यो यदाहृतं । दत्वा सुगतविम्बं तज्जनोऽयमनुदृष्यतां ।
सलिलोत्तरणोपायो मणी देवेन दृश्यतां । संसारोत्तरणोपायः सुगतो मह्यमर्प्यतां । १६०
इति तेनार्थितो युक्त्या जिनविम्बं ददौ नृपः । वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः ।
स्वविहारेऽथ भगवान् स तेन विनिवेशितः । कपिशाभिः सकाशाय इव यो भाति कान्तिभिः ।
दृश्यतेऽद्यापि कटकैराद्यैः परिवेष्टितः । गजस्कन्धनिबद्धस्य सूचको यस्य विष्टरः ।
अभिप्रायानुसारेण प्रकटीकुरुते प्रियं । अहो महाप्रभावाणां भूपतीनां वसुन्धरा ।
आरोपितं कदाचित्स स्वयं दमयितुं हयं । निशायामरण्यमेकाकी हयविद्याविशारदः । १६५
दूरान्निर्मानुषे तत्र ललनां ललिताकृतिं । एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि ।
क्षणाच्च ते समापद्य गतमत्य मृगीदृशौ । प्रणम्य किञ्चिद्गच्छन्त्यावपश्यद्दमयन् हयं ।
तुरगं तं समारुह्य तत्रागच्छद्दिने दिने । दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत् सविस्मयः ।
तमूचतुस्ते नर्त्तक्यावावां देवगृहाश्रिते । यः शूर वर्त्तमानोऽयं रामलक्ष्मणयोर्गृहं ।
इहत्यजीवनभुजां मातॄणामुपदेशतः । अस्मत्कुलेन नियतं नृत्यमत्र विधीयते । १७०
रूढिः परम्परायाता सेयमस्मत्कुले स्थिता । आवामन्योऽपि वा नात्र निमित्तं ज्ञातुमीश्वरः ।
एवं तयोस्तयोः श्रुत्वा नृपोऽन्येद्युः सविस्मयः । तदुक्तां मेदिनीं कृत्स्नां कारुभिर्निरदारयत् ।
दृष्टं निर्दृतसङ्क्लिष्टैर्यथाज्ञावधिनिवेदितं । नृपतिः पिहितद्वारं जीर्णदेवगृहद्वयं ।
उद्घाटितारर्वैर्णैः पीठोत्कीर्णौ निवेदितौ । अपश्यत् केशवौ तत्र रामलक्ष्मणनिर्मितौ ।
परिहासपुरे पार्श्वे पृथक् कृत्वा शिलागृहं । स रामस्वामिनः श्रीमान् प्रतिष्ठाकर्म निर्ममे । १७५
देवोऽपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवं । चङ्कमर्दिकया चक्रेश्वरपार्श्वे निवेशितः ।
दिग्जये पुरुषः कश्चिद्दृष्टप्रत्ययनिग्रहः । अथ न्यस्तपदात्मानं गजारूढस्य भूभुजः ।
तं छिन्नपाणिघ्राणादिसत्वैः शोणितवर्षिणं । त्राणार्थिनं कारुणिकः स्वादन्तं पृष्टवान्नृपः ।
स तस्मै सिकतासिन्धुसविधस्थस्य भूपतेः । प्रख्यातमूचे सचिवमाख्यातं हितकारिणं ।
प्रणतिर्न्निनतादित्यनृपतेः क्रियतामिति । हितं कथयतः स्वस्य निग्रहश्च ततो नृपात् । १८०
॥ युग्मं ॥ प्रतिजज्ञे च भूपेन तत्सत्स्वामिनिग्रहः । रूढव्रणोऽगदङ्कारैः स चाकार्य्यत सत्कृतैः ।
ततो विहितयात्रं तं स सस्मो कृतसत्क्रियः । कदाचिदेवमवदद्विजेन जगतीभुजं ।
एवंविधस्य कायस्य राजन् यत् परिरक्षणं । तत्र वैरविशुद्ध्याशा विडम्बयति मामियं ।
वाष्पैर्जलाञ्जलिं दत्वा दुःखाय च सुखाय च । कृतकृत्यो ध्रुवं जह्यादेवमानहतानहन् ।
अपहृत्याधिकं शौरपकारं जयोहितं । गम्भीरं प्रतिनदेव निनादं सदतो गिरेः । १८५
इतो मासैस्त्रिभिर्गम्या भूः प्राप्या त्वरितं कथं । यदा वा प्राप्यते वैरी तदा तत्रैव किं वसेत् ।

मासार्द्धलङ्घ्यं पन्थानं तस्मादुपदिशामि ते । ग्रहीष्या स जलं गव्यसमूनां किन्तु निर्जल: ।
तद्भूमिजा रुस्थेवो मे न वक्ष्यन्ति सदागमं । सामात्यान्त:पुरो राजा हरणा मेन गृह्यते ।
इत्युक्ता सोऽकरोत्तस्य प्रवेशं वालुकार्णवे । पथे क्षीणे तु कटको निस्तोय: समपद्यत ।
तत्राप्यहानि दिनानि वहस्तत्राभवन्नृप: । तृष्णार्त्तं वीक्ष्य सैन्यञ्च मन्त्रिणं समभाषत । १९०
उष्णकालाधिका यावद्वासरा गमिता: पथि । मुमूर्षु तृष्णया सैन्यं तदध्वा श्रियते कियान् ।
ततो विहस्य सोऽवादीज्जिगीषो: शेषमध्वन: । किं पृच्छस्युग्ररिपवस्य यमराष्ट्रस्य वा भवान् ।
त्वं हि स्वामिहितार्थेव समुपेक्ष्य स्वजीवितं । मृत्युजनं सकटको मया युक्त्या प्रवेशित: ।
नेदं महमहीमात्रं भीमोऽयं वालुकार्णव: । नाम्भोऽत्र लभते क्वापि कस्माना तेऽत्र भूपते ।
श्रुत्वेति पृतना कृत्स्ना समभूद्वीतधीष्टया । करकार्भञ्जितफला स्तम्भितेव शालिभू: । १९५
सम्यक्कजीविताशानां भीकरां क्रन्दितध्वनिं । भुजमुद्यम्य शमयंस्ततोऽमात्यमब्रवीत् ।
अमात्य तव कृत्येन प्रीत: स्वामिहितैषिण: । मरावप्यत्र शीतार्त्ता इव रोमाञ्चिता वयं ।
अभेद्यमाने मयि तु व्यर्थमेवंविधेऽपि ते । प्रयोग: कुण्ठतां यातो लोहं वज्रमणाविव ।
मणिभ्रमादश्मकणं ग्रहन् दृषदा इवाकुली: । त्वं मिथ्यावयवामूलामव शोषिष्यसि ध्रुवं ।
निदर्शनेन मे पश्य पय: स्रोतोऽस्य मेदिनी । रसितेनाम्बुवाहस्य रत्नं वैदूर्यभूरिव । २००
इत्युक्ता सोऽम्बु निष्कष्टुं कुन्तेनोर्वीं व्यदारयत् । उज्जिहीर्षुर्वितस्ताम्भ: शूलेनेव त्रिलोचन: ।
अथोऽजगाम पातालजलस्रोतोऽलिलाञ्छितच्छवि: । सरातलात् सरित्साकं सैन्यानां जीविताशया ।
तस्य सेनाचराणां सा क्रमं विच्छेद वाहिनी । कथाव्यथीकृताङ्गस्य मन्त्रिणस्तस्य चेष्टितं ।
लूनाङ्गो सङ्कलाङ्गसी स कृत्वा विफलश्रम: । स्वस्य भर्त्तुर्निदेशाद्वो नगरीमस्तकस्तत: ।
राज्ञोऽपि कुटिलाचारो निगृह्य स महीपति: । निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत । २०५
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्त्तिता: । अद्यापि कुल्यावाहिन्य: प्रवहन्त्युत्तरापथे ।
सहस्रश: सम्भवन्त्योऽप्यपरे भुवनाद्भुता: । अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिता: ।
यन्नि:शब्दजला घनाश्मपरुषं देशेऽतिघोरे रवा यच्चाच्छा: समये पयोदमलिने कालुष्यसन्दूषिता: ।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देशकालाश्रितो तत्सत्यं महतामपि स्वमहिमाचारप्रवृत्तिप्रदो ।
कलेर्वायं प्रभाव: स्यान्नरनाथासनस्य वा । यत् सोऽपि भीमकर्मणा: प्रवृत्ती: समदर्शयत् ।
॥ युग्मं ॥ अवरोधसखो राजा परिहासपुरे स्थित: । स जातु सदिराक्षीब: सविवादेवसस्मरात् । २१०
कृतं प्रवरसेनेन यदेतत् प्रवरं पुरं । तन्निर्दहाय मन्ये्व सत्पुरस्यैव चेष्टितं ।
घोरामनर्हिताज्ञस्य श्रुत्वेत्याज्ञां महीपते: । गत्वाग्रु धामकूटानि तेऽदहन् वातुलात्मके ।
हर्म्याग्राद्वीक्ष्यमाणस्तद्वह्निज्वालोज्ज्वलानल: । उल्कामुखवराभुत्स हर्षोद्धुरस्मितोत्कट: ।
देवादिवैकृतवत: प्रतिभासतेऽन्यो मिथ्यैव चित्रमधिको विपदात्मनोऽपि ।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षु: ।

नैवद्राक्षीदेकमपि तत् पुरं प्रवरभूपतेः । अमक्षापुरनिर्माता स निर्वेदाधिकं श्रुतः । ३१५
॥ युग्मं ॥ क्षीणचेष्टोऽथ निर्धाय नगरश्रीविकल्पितं । उच्छ्वासनिःश्वासमुच्चदा पश्यन्नोऽनुग्रहाग्रिमा ।
तत् कृष्णेऽन्तः सुषिरा गृहं येनाततुष्वयं । दृश्यन्ते जीर्णतरवः कोटरस्थानला इव ।
प्रातस्तमथ शाचम्भं मदःखं वीक्ष्य मन्त्रिणः । चिन्तानिवर्तनायोचुः पुरश्लोषं मृषैव तत् ।
श्रुते प्रनष्टे नगरे निःशोकोऽभून्महीपतिः । स्वप्नान्तदर्शिते पुंसे मदृष्टोऽपदव स्थिते ।
कार्य्यं न जातु तदाक्यं यत्क्षीबेण मयोच्यते । तान्युक्तकारिणोऽमात्यान् प्रशंसन्निति सोऽब्रवीत् । ३२०
प्रियमनुचितं व्यापद्यस्त्रोणप्रभुरोश्वरो रमयति यतो धिक्तान् भृत्यान् स्ववृत्तिसुखार्थिनः ।
नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूतेयं महात्मभिरुर्व्वरो ।
अतीव्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः । अयमन्योऽपि दोषोऽभूदितरर्ज्जिनिपोर्चितः ।
दत्त्वापि यत् स मध्यस्थं श्रीपरीहासकेशवं । अघातं तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवं ।
गौडापजीविनामासीत् सत्त्वमत्यद्भुतं तदा । अकृर्थं जीवितं धीराः परासुस्य प्रभोः कृते ।
शारदादर्शनमिषात् कश्मीरान् सम्प्रविश्य ते । मध्यस्थदेवसदनं संहताः समवेष्टयन् । ३२५
दिगन्तरस्थे भूपाले प्रविविक्षूनवेक्ष्य तान् । परिहासहरिं चक्रुः पूजकाः पिहितार्गलं ।
ते रामस्वामिनं प्राप्य राजतं विक्रमाश्रिताः । परिहासहरिं भ्रान्त्या चक्रुरुत्पाट्य रेणुशः ।
तिलं तिलं तं कृत्वा च क्षितिप्रदेशु सर्व्वतः । नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ।
श्यामला रक्तमिश्रास्तेऽपतन्निहता भुवि । अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दाङ्किता इव ।
तदीयरुधिरासारैः समभूदुज्ज्वलीकृता । स्वामिभक्तिरसामान्या धन्या चेयं वसुन्धरा । ३३०
वज्रादश्रुतं भयं विरमति श्रीः पद्मरागाङ्कमिवाभाकारमपि प्रशाम्यति विषं गारुत्मतादश्मनः ।
एकैकं कियत् प्रभावनियमात् कर्पूतिरश्मैः परं पुरुषैः परमप्रमेयमहिमोत्तुङ्गैर्न किं साध्यते ।
क दीर्घकालनष्टोऽध्वा क्वासौ भक्तिः क च प्रभौ । विधातृणामप्यसाध्यं यद्गौडैर्व्विहितं तदा ।
लोकोत्तरस्वामिभक्तिप्रभावाणि पदे पदे । तादृशानि तदाभूवन् सत्यरत्नानि भूभृतां ।
राज्ञः पित्रोरक्षितोऽभूद्गौडराजवधविभ्रमे । रामस्वाम्यपहारेण श्रीपरीहासकेशवः ।
अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदं । ब्रह्माण्डं गौडवीराणां समायं यशसा पुनः । ३३५
एवं नानाविधादन्तर्ग्रामरात् क्ष्मापतेर्ययुः । चिरलाः स्वपुरे तस्य भूयांसस्तु दिगन्तरे ।
अनन्याक्रान्तपृथिवीसमालोकनकौतुकी । अपारं प्रविवेशाथ पुनरेवोत्तरापथं ।
कर्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः । नैकैतेस्माह दृष्टान्तास्तस्य ते ते तदाभवन् ।
नाद्यापि या भुवः दृष्टा जाने भानुकरैरपि । राज्ञस्तस्य बभूवाज्ञा तत्र स्वैरविहारिणी ।
चिरसम्भ्रात् तत्स्थानीर्मन्त्रिभिः प्रहितस्ततः । प्रत्याहृत्तस्तस्य पार्श्वाद्धस्तानिवसृकथान् । ३४०
इत्यादिशति वः स्वामी कोऽयं मोहो भवादृशां । क्वामिमां मे प्रविश्यन्त प्रतीक्षध्वे यदागमं ।
नवं नवं प्रतिदिनं सम्पाद्य विजयार्ज्जनं । सुराः सम्प्रविष्टस्य किंद्राघ्रं मम पश्यथ ।

विनिर्गतानां स्वभुवः सरितां सलिलाकरः । न निवृत्तं जिगीषूणां दृश्यते अवधिः क्वचित् ।
तस्मादाचारसारं वो वक्ष्ये स्वस्थितोचितं । राज्यं तदनुसारेण निर्विघ्नं कुरुतानघाः ।
अत्रस्थैः सर्व्वदा रक्ष्यः सुभेदः प्रभविष्णुभिः । वाम्याकाशानिवेषां हि भयं न परलोकतः ।
अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः । ते हि संचितवित्ताः स्युर्दुर्भेद्या दुर्गसंश्रयाः ।
वर्षोपभोग्यान्यन्नानि क्षेत्रभूमिस्थिता कृषाः । धान्यानां नातिरिच्यन्ते यथाकार्य्यं तथासकृत् ।
अधिकीभूतवित्ता हि वत्सरेणैव ते भृशं । भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ।
वस्त्रं स्त्रियः कथाभोज्यमलङ्कारा हया गृहाः । ग्रामास्थस्य यदा जातु ग्रामीणैर्नगरोचिताः ।
सदा दुर्गाण्युपेक्ष्यन्ते संरक्ष्याणि यदा नृपैः । यदा चाननुरागत्वं तेषां भृत्येषु दृश्यते ।
प्रदेशादेकतो कडा यदा हस्तिश्च शस्त्रिणां । अन्योन्योद्वाहसम्बन्धैः कायस्थाः संहता यदि ।
कर्म्मस्थानानि वीक्षन्ते स्वापाः कायस्थवद्यदा । तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्य्ययः ।
॥ चतुर्भिः कुलकं ॥ चेष्टानुसारिणोऽत्रैव कटमादाय संविदं । सयोक्तं हृदये कार्य्यमन्तरं राजवीजिनां ।
प्रत्यासक्तं मदकरटिनो दानगन्धेन वायुर्गर्ज्जोद्भूतं प्रकटितकुपितस्थलेवाम्बुदस्य ।
चेष्टा स्पष्टं वदति मतिमन्नैपुणेश्वरतस्या अन्तोऽर्व्वावलम्बपरिचितां निश्चलां चित्तवृत्तिं ।
पुत्रः कुवलयादित्यो वज्रादित्यश्च मे सुतौ । भिन्नश्रोत्रा तयोर्भ्रातावोभौ वैमातुरयोः पुनः ।
ज्यायान् राज्येऽभिषेक्तव्यः स च स्याद्बलवान् यदा । तस्याज्ञातिक्रमः कार्य्यो भवद्भिर्नियमात् सदा ।
उत्सृजत्यौत्रिकं वापि राज्यं वापि स पार्थिवः । श्रावणीयो न केनापि स्मरतेदं वचो मम ।
कार्य्यः कनीयांश्च नृपः प्रमादात् क्रियते यदि । नोसङ्गनीया तस्याज्ञा रक्ष्यश्च विषमोऽपि सः ।
पौत्रेषु मे कनीयान् वो जयापीडोऽस्ति दारकः । पितामहसमो भूया इति वाच्यः स सर्व्वदा ।
भर्त्तुर्गृहीतनैराश्याः साभिप्रायाः प्रणम्य तान् । आनंतुः पश्चिमामाशां ते वाक्यार्थकृतत्वजः ।
उवाच चङ्कुणो जातु सन्निपत्याखिलाः प्रजाः । वाष्पैः पतिवियोगाग्नितप्तां सिञ्चन् वसुन्धरां ।
राज्ये कुवलयापीडो राजपुत्रोऽभिषिच्यतां । सुगृहीताभिधो राजा गतः स सुकृती दिवं ।
सहजे यस्य कृतिनो दैवतैः कोषदुर्द्धये । रससिद्धिरकस्मात्से यस्मात् सात्म्यमुपागता ।
दूरस्थोऽपि हि भूभर्त्ता भाग्यसम्पत् कयाचन । कार्य्याणि घटयत्यासीदुर्घटान्यपि हेलया ।
अम्भोजानि घनाघनव्यवहितोऽप्युच्चाघयत्यंशुमान् दूरस्थोऽपि पयोधरोऽनिमिषिरस्पर्शी करोत्यातपं ।
शक्तिः काप्यपरीक्षितास्ति महतां स्वैरं दविष्ठान्यतो यस्मात्तत्यजनेन यान्ति घटनां कार्य्याणि निःशेषतां ।
सैकादशदिनान् सप्त मासान् षट्त्रिंशतं समाः । एवमाक्रम्य स मही प्राप्तश्चास्तमाययौ ।
तुषारवर्षैर्वहिनस्तमकाण्डनिपातिभिः । आर्य्याणकाभिधे देशे विपन्नं केचिदूचिरे ।
राजप्रष्ठः प्रतिष्ठां स रक्षितुं चिरसञ्चितां । सङ्कटे क्वापि दहनं प्राविशदिति केचन ।
केचिदाहुर्मते भूभृद्वीरयुक्तरापथे । सोऽसत्यमुत्तमां भूमिं प्रविष्टः कटकान्वितः ।
अत्यद्भुतानि कृत्यानि श्रुतान्यस्य यथा किल । विपत्तिरपि भूभर्त्तुस्तथैवात्यद्भुता श्रुता ।

यातोऽस्तं द्युमणिः पयोधिसलिलं कैश्चित् प्रविष्टोऽपरैः सम्प्राप्तो दहनं गतः किल परैर्लोकान्तरं कीर्त्यते ।
जायन्ते महतामहो निरुपमप्रस्थानहेवाकिनां निःसामान्यमहत्त्वयोगपिशुना वार्त्ता विपत्तावपि ।
ततः कुवलयापीडो भेजे कुवलयेशतां । जातः कमलदेव्यां यः श्रीमान्कुवलयादितः ।
त्यागेन चक्रे विशदां योऽनुरक्तां नृपश्रियं । महोरगस्य चर्मेव स्वभावमलिनामपि ।
भ्राता तुल्यप्रभावेण कश्चित्कालं हृतप्रभः । स कुलाम्बुजभानुः प्रदीप इव नाद्युतत् ।
भङ्क्त्वा वाङ्मयैर्दानसौभाग्यपर्यायहृद्गिभिः । श्रीर्द्वयोर्भ्रात्रोरन्तर्निर्भरकटयोरिव ।
अथाभयधनादायि भृत्यशक्तिकथा समं । राजा कुवलयापीडो बभञ्जानुजमञ्जसा ।
राज्यं निष्कण्टकं कृत्वा ततः प्राप्तबलो नृपः । दिग्जयार्जितकान्तिः सोऽभूत् सम्भृतसाधनः ।
एकस्मिन् क्षणे मन्त्री तस्याज्ञामुदलङ्घयत् । स्मरन् वा तत्पितुर्भावं भजन् वा दर्पविक्रियां ।
प्राप्तायामपि यामिन्यां तस्मै कोपाकुलो नृपः । तमाज्ञातिक्रमं ध्यायन् निद्रां क्षणमप्यगात् ।
एवं कृतागसं हन्तुं सम्पृच्छ्य तदाश्रयात् । बहवः प्रत्यभासन्त बध्यास्तस्योद्यतक्रुधः ।
विरागशैलमथिताम्भस्य चित्तमहोदधेः । प्रकोपकालकूटस्य पश्चात् प्रशमसुधोद्गात् ।
दध्यौ सोऽथ गतक्रोधः प्रहृष्टः प्राणिसङ्क्षयः । एतावान् कस्य नु कृते कर्त्तव्यः प्रत्यभासत ।
अकार्याण्यपि पर्याप्य कृत्वापि दुरितार्जनं । विधीयते हितं यस्य स देहः कस्य सुस्थिरः ।
कृतघ्नस्यास्य कायस्य हेतोरर्गलितस्मृतेः । कृत्याः काव्यपन्थानः प्रतिभान्त्यनपायिनः ।
वदन्ति जन्तवो हन्त पश्यमानस्य नात्मनः । अवश्यं कालखड्गेन हतां तां तां क्षणे क्षणे ।
यः पश्यद्भिरकारणस्मितमितं पाथोजकोशाकृतिस्मश्रुद्रोधकठोरमत्र रभसादुत्तप्तताम्रप्रभं ।
प्रातर्जीर्णबलत्वकेशविकृतिं दुःखाजरार्णोपमं वक्त्रं नः परिदृश्यते भुवमिदं भूतैरपस्थायिभिः ।
इत्याद्यनित्यताचिन्तादभ्यशान्तिसुखादरः । राज्यं सन्त्यज्य स वनं सत्प्रस्रवणं ययौ ।
गच्छ भद्र वनायेति तपस्याधीयतां मनः । सापायाः क्षणभङ्गिन्य एवंप्राया विभूतयः ।
तेन सन्त्यजता राज्यं लिखितेन निजासने । वैराग्यशमनोत्सेकः श्लोकेनानेन सूचितः ।
असम्प्रश्नसम्बन्धेरनर्थसिद्धिर्नराधिपः । श्रीपर्वतादावद्यापि भव्यानामेति दृक्पथं ।
तथा याते प्रभोः पुत्रे मित्रशर्मा गुरुान्वितः । वितस्तासिन्धुसम्भेदे सभार्यो जीवितं जहौ ।
राज्यं समाः समासाद्य कृत्वा स वसुधाधिपः । निःश्रेयसप्राप्तिनिःश्रेणी सुधीः सिद्धिं समासदत् ।
वज्रादित्यो वप्पियको ललितादित्य इत्यपि । ख्यातोऽथ भूभृदभवत्कमाता चक्रमर्दिका ।
स क्रूरचरितो भ्रातुः प्रजाह्लादविधायिनः । सुधांशोरिव दुर्वासा नूनं विमतृशोऽभवत् ।
परिहासपुरात् पित्र्यां नानोपकरणावलीं । स जहार दुराचारो भूभृल्लोभवशंवदः ।
रागिणो भूमिपालस्य भूयस्योऽन्तःपुरस्त्रियः । बीजाश्वस्येव वडवासाहस्राः समस्मवन् प्रियाः ।
विक्रयेण प्रयच्छन् स म्लेच्छेभ्यः पुरुषान् बहून् । म्लेच्छाचितां व्यवहृतिं प्रावर्त्तयत मण्डले ।
सप्ताब्दान् वसुधां भुक्त्वा सोऽतिसम्भोगजन्मनां । जगाम सङ्क्षयं यक्ष्माभूत् क्षयरोगेण किल्बिषी ।

तस्मान्मञ्जरिकादेव्या जातो राजा प्रजान्तकः । ततः पृथिव्यापीडोऽभूत् समाश्चतुरः समाः ।
जातो मल्लाभिधानायां वञ्चयित्वा सप्त वासरान् । सङ्ग्रामापीडनामाथ तमुत्थाप्याभवन्नृपः ।
भ्रातरौ तौ समामात्र राज्यं नैव व्यराजत । हेमन्तशिशिरावाप्य चण्डांशोरिव मण्डलं ।
यातेऽथ संग्रामापीडे कनीयाननिन्द्यवाङ्मनाः । राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात् ।
पितामहसमो भूयादित्यमात्यवचः स्मरन् । जिगीषुः सम्भृतबलो दिग्जयाय स निर्ययौ ।
स्वदेशादेव नयविद्यां नीतैः समं नृपैः । शृङ्गान् पप्रच्छ निर्गच्छन् काश्मीरद्वारगोचरान् ।
पितामहस्य नः सैन्यं कियन्निर्गच्छतोऽभवत् । इति श्रुत्वाथ याचामु यूयं सञ्ज्ञातसैनिकाः ।
हतस्मिनाम्नमृत्यसे किं प्रश्नेनामुना प्रभो । वस्तु कश्चिदनिक्रान्तं नामुकर्तुं क्षमोऽधुना ।
दर्शनीयानां तस्यासीत् सपादं लक्षमीशितुः । अशीतिस्तु सहस्राणि देवस्याद्य जयोद्यमे ।
तदाकर्ण्य जयापीडो बहु मेने न निश्चयं । क्षिप्रं क्षितिः सङ्कुचन्त्याः कालस्य बलवत्तया ।
जिगीषोः स्वाभुजस्तस्य भावमालोक्य तादृशं । दध्यौ भावज्ञतां दृष्ट्वा ललितादित्यभूपतेः ।
तस्य दूरप्रयातस्य श्यालो जज्जाभिधो बलात् । द्रोहेणाक्रम्य काश्मीरान् स्वयं भेजे नृपासनं ।
दिने दिने राजसैन्यात् स्वदेशस्मारिणस्ततः । सैनिकाः स्वान्यवर्त्तन्त स्वामिभक्तिपराङ्मुखाः ।
प्रस्थापयिष्यन् स्वामेव शक्तिं परिकरं विना । निश्चिकायं जयापीडो युक्तां काञ्चित्तु सम्विदं ।
अभङ्गराणोऽभिमानास्तस्यैवामन्मनस्विनः । अभ्यवर्षत धैर्येण वेधासोऽपि वामताः ।
स विसृज्य भृतं स्वां स्वां भूपतीननुयात्रिकान् । प्रयागमगमत् सैन्यैः परिमेयैर्निजैः समं ।
तत्रावशिष्टाश्रितस्थ्य वाजिनः स समाजवान् । द्विजेभ्यो लक्षमेकोनं प्रददौ भूरिदक्षिणं ।
सम्पूर्णमन्यो लक्षं यः प्रदद्यादश्ववाजिनां । तन्मुद्रयेयं मन्मुद्रा विनिवार्येत्युदीर्य च ।
श्रीजयापीडदेवस्येत्यक्षरैरुपलक्षितां । दिग्देशगामिनो मुद्रां गाङ्गस्य पयसो ददौ ।
तन्मुद्राङ्कं पयः पीत्वा गाङ्गमद्यापि निर्मलं । चित्ते प्रवर्द्धते तापो भूपानामभिमानिनां ।
स्वदेशागमनानुज्ञां सैन्यस्याप्तमुखेन सः । दत्वा निशायामेकाकी निर्ययौ कटकान्तरात् ।
मण्डलेषु नरेन्द्राणां पर्यादानामिवार्थ्यसा । गौडराजाश्रयं गुप्तं जयन्ताख्येन भूभुजा ।
प्रविवेश क्रमेणाथ नगरं पौण्ड्रवर्द्धनं । तस्मिन् सौराज्यरम्याभिः प्रीतः पौरविभूतिभिः ।
लास्यं स द्रष्टुमविशत् कार्त्तिकेयनिकेतनं । भरतानुगमालक्ष्य नृत्यगीतादिशास्त्रवित् ।
ततो देवगृहद्वारशिलामध्यास्त स क्षणं । तेजोविशेषचकितैर्जनैः परिहृतान्तिकं ।
नर्त्तकी कमला नाम कान्तिमन्तं ददर्श तं । असामान्याकृतेः पुंसः सा ददर्श सविस्मया ।
असंदृष्टोऽथ धावन्तं करं तस्यान्तरान्तरा । अचिन्तयत्ततो गूढं चरन्नेव भवेद्ध्रुवं ।
राजा वा राजपुत्रो वा लोकोत्तरकुलोद्भवः । एवं गृहीतुमभ्यासः पृष्ठस्थाः पर्णवीटिकाः ।
अंसपृष्ठेन येनायं लसत्पाणिः प्रतिक्षणं ।
लोलश्रोत्रपुटो मदोत्कमधुपापातात्ययेऽपि द्विपः शिरः सत्यपि पृष्ठतः करिकुले व्यावृत्य विप्रेक्षिता ।

सेवाप्रसुखमेऽप्यस्मान्नवदनोद्गीर्णसङ्गरे वर्हिणश्रेष्ठानां विस्मेऽस्य हेतुर्विस्मयेऽप्यसामदीर्घास्थिति: ।
इत्यन्तश्चिन्तयन्ती सा ज्ञात्वा सङ्केतमस्मिदं । सखीमभिन्नहृदयां विससर्ज तदन्तिकं ।
ताम्बूलपृष्ठं गते पाणौ पूगखण्डांस्तयार्पितान् । वस्त्राऽक्षिपक्ष्मजयापीडः परिस्पृश्य ददर्श तां ।
भुजंगयामि कस्य त्वं पृष्टाया इति सुभ्रुवः । ददन्या वीटिकान्तस्था हृत्कान्तमुपलब्धवान् ।
तया जनितदाक्षिण्यमेलोत्कण्ठभावितैः । सख्याः समासन्नतया नित्ये स वर्त्तितं शनैः ।
अथान्यपेशलालापा तया तं सा विलासिनी । उपाचरत् परार्ध्यश्रीः सोऽप्यभूद्विस्मितो यथा ।
ततः शशाङ्कधवले सञ्जाते रजनीमुखे । पाणिनालम्ब्य भूपालं शय्यावेश्म विवेश सा ।
ततः काञ्चनपर्य्यङ्कशायी मैरेयमत्तया । तयार्थितोऽपि शिथिलं विदधे साधरांशुकं ।
प्रवेशयन्निव हृदि लग्नां सत्रपाननः । दीर्घबाहुः समाश्लिष्य स शनैरिदमब्रवीत् ।
न त्वं पद्मपलाशाक्षि न मे हृदयहारिणी । किन्तु कालानुरोधोऽयं सापराधं करोति मां ।
दासस्तवायं कल्याणि गुणैः क्रीतोऽस्म्यहर्निशैः । अचिराज्ज्ञातवृत्तान्ता ध्रुवं दाक्षिण्यमेष्यसि ।
कार्य्यं शेषमनिष्पाद्य सक्तं मानिनि कश्चन । अभोगे कृतसङ्कल्पं सुखानां त्वमवेहि मां ।
तामेवमुक्त्वा पर्य्यङ्कं साङ्गुलीयेन पाणिना । वादयन्निव निःश्वस्य श्लोकमेतं पपाठ सः ।
असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः । अनाक्रम्य जगत्सर्व्वं नो सन्ध्यां भजते रविः ।
श्लोकेनात्मगतं तेन पठितेन महीभुजा । सा कलाकुशलाज्ञासीन्महात्मानं कञ्चिदेव तं ।
गन्तुकामञ्च तं प्रातर्नृपं प्रणयिनी बलात् । अर्थयित्वा चिरं कालमप्रस्थानमयाचत ।
एकदा वन्दितुं सन्ध्यां प्रयातः सरितस्तटं । चिरायातो गृहं तस्या ददर्श अश्रुविक्लवं ।
किमेतदिति पृष्टाथ तमूचे सातिविस्मिता । सिंहोऽत्र सुमहान् रात्रौ निपत्याहन्ति देहिनः ।
नरनागाश्वसंहारः कृतस्तेन दिने दिने । त्वया दूरं चिरायाते तद्भयेन समाकुलाः ।
राजानो राजपुत्रा वा तद्भयेन विसर्जिताः । गृहेभ्यो नात्र निर्यान्ति प्रवृत्ते क्षणदाक्षणे ।
तामिति ब्रुवतीं मुग्धां निषिध्य च विहस्य च । सक्रीड इव तां रात्रिं जयापीडोऽत्यवाहयत् ।
अपरेद्युर्दिनापाये निर्गतो नगरान्तरात् । सिंहागमप्रतीक्षोऽभून्महावटतरोरधः ।
अदृश्यत ततो दूरात्स्फुरद्बकुलच्छविः । अट्टहासः कृतान्तस्य सञ्चारीव मृगाधिपः ।
अध्वनान्येन यान्तं तमथ मन्थरगामिनं । राजसिंहो नदन् सिंहं समाह्वयत हेलया ।
स्तब्धरोमा व्यात्तवक्त्रः कम्प्रकूर्चः प्रदीप्तदृक् । तद्रसपूर्व्वकायस्तं सगर्ज्जः समुपाद्रवत् ।
तस्यान्यस्यानतर्विश्य कफोणिं पततः क्रुधा । क्षिप्रकारी जयापीडो वक्षः क्षुरिकयाभिनत् ।
शोणितं जग्धगन्धमसिन्दूराभं विमुञ्चता । एकप्रहारभिन्नेन तेनात्यज्यत जीवितं ।
आमुक्तव्रणपट्टः स कफोणिमथ गोपयन् । प्रविश्य नर्त्तकीवेश्म निशि सुष्वाप पूर्व्ववत् ।
प्रभातायां विभावर्य्यां श्रुत्वा सिंहं हतं नृपः । प्रहृष्टः कौतुकाद्द्रष्टुं जयन्तो निर्ययौ स्वयं ।
स दृष्ट्वा तं महाकायमेकप्रहृतिसंहतं । साश्चर्य्यो निश्चिकायासौ प्रहर्त्तारममानुषं ।

तस्य दन्तान्तरालस्थं केयूरं पार्श्वगार्पितं । श्रीजयापीडनामाङ्कं ददृशुश्च चकितास्ततः ।
स्यात् कुतोऽत्र स भूपाल इति ब्रुवति पार्थिवे । जयापीडागमाशङ्कि पुरमासीद्भयाकुलं ।
ततः पौरान् विमृश्यैव जयन्तः क्षितिपोऽब्रवीत् । प्रहर्षविस्मये मूढाः कस्माद्वो भयसम्भवः ।
श्रूयते हि जयापीडो राजा भुजबलोर्जितः । केनापि हेतुना भ्राम्यन्नेकाकीव दिगन्तरे ।
राजपुत्रः कक्कट इत्युक्ता कल्याणदेव्यसौ । तस्मै नियमिना दातुं विष्णुनेव मता मया ।
सोऽन्वेषयन् स्वयं प्राप्तस्तद्बलाहरणेच्छया । रक्षादीपं प्रतिष्ठाप्य निधानाच्छादनं गृहात् ।
अस्मिन्नेव पुरे तेन भाव्यं भुवनशासिना । भूयादिमं समान्वेष्य योऽस्मै दद्यामभीप्सितं ।
वाचि सप्रत्ययाः पौरा भूपतेः सत्यवादिनः । अन्विष्य कमलावासवर्त्तिनं तं न्यवेदयन् ।
सामात्यान्तःपुरोऽभ्येत्य प्रयत्नेन प्रसाद्य तं । ततः स्ववेश्म नृपतिर्निनाय विहितोत्सवः ।
कल्याणदेव्या सोऽनाथ कल्याणाभिनिवेशिना । राजलक्ष्म्या व्यपास्ताया इव सोऽजिग्रहत्करं ।
व्याप्ताहिनापि सामग्रीं तत्र शक्तिं प्रकाशयन् । पञ्च गौडाधिपान् जित्वा श्वशुरं तदधीश्वरं ।
गतेश्वयं प्रभूत्यक्तं सैन्यं समाह्वयन् स्थितः । मित्रशर्मात्मजो देवशर्मामात्यसमाययौ ।
निजदेशं प्रति ततः स प्रतस्थे तदर्पितः । स्वयं जयश्रियं कुर्व्वन् पश्चात्सोऽथ सुतोत्सवे ।
संहासनं जितादादेः कान्यकुब्जमहीभुजः । स राज्यककुदं राजा जहारोदारपौरुषः ।
तस्मिन् प्रविष्टे स्वभुवं स्फूर्जद्दर्जितविक्रमे । सैन्यैस्तस्य समित्सज्जैर्जज्जो योद्धुं विनिर्ययौ ।
पुष्कलेत्राभिधे ग्रामे तेन सार्द्धं सुदारुणः । जयापीडस्य सङ्ग्रामः सुबहूनि दिनान्यभूत् ।
अमरकप्रष्ठो राजा जज्जराज्यासहिष्णुभिः । युधि सोऽन्विष्यमाणोऽभूद्भ्राम्यद्भटविक्रमशालिभिः ।
श्रीदेवो ग्रामचण्डालः प्राप्तो ग्राम्यैः समं युधि । कोऽत्र जज्ज इति भ्राम्यन् योधान् पप्रच्छ सर्वतः ।
तृष्णार्त्तं स्वर्णभृङ्गारात् पिबन्तं वारि तस्य ते । रणमध्ये हयारूढं तं दूरात् समदर्शयन् ।
भ्रमयन् चरणौ स शिलाश्मानं तदानने । सोऽयं हतो मया जज्ज इत्यमोघक्रियोऽवदत् ।
साहाय्यकाय राज्ञोऽहं यामीत्युक्ता हिताशनः । भ्रातुर्हन्तुर्जज्जस्य प्रतिज्ञाय ययौ वधं ।
अश्वसंरब्धसीमास्थं मुमूर्षुं पतितं हयात् । विवेष्टमानं मेदिन्यां जज्जं त्यक्ता ययुर्निजाः ।
स समर्थाहितापातचिन्तासन्ततदुःखितः । द्रोहार्जितेन राज्येन त्रिभिर्वर्षैर्व्ययुज्यत ।
न्यासापहारादृणिनां वेश्यानां कामिवञ्चनात् । द्रोहाच्चोपनता राज्ञामस्थिरा एव सम्पदः ।
हते जज्जे जयापीडः प्रत्याहृत्य निजां श्रियं । जयाद्दोष्णा भूभारं कल्पयन् च सतां मनः ।
प्रपेदे यत्र कल्याणं स विरोधिवधाश्रयः । देशे कल्याणपुरकृत्तत्र कल्याणदेव्यभूत् ।
राजा मल्लाणपुरकृच्चक्रे विपुलकेशवं । कमला सा स्वनाम्नापि कमलाख्यं पुरं व्यधात् ।
महाप्रतीहारपीठाधिकारं प्रतिपद्य सः । कल्याणदेवी दाक्षिण्यादकरोदधिकोन्नतिं ।
उत्पत्तिभूमौ देशेऽस्मिन् दूरदुर्गतिरोहिता । कश्यपेन वितस्तेव तेन विद्यावतारिता ।
वचोमूर्खोऽयमित्येव कस्मैचिद्वदते स्फुटं । सर्वज्ञानं ददर्शक सर्वान् विद्याभियोगिनः ।

देशान्तरादागमय्य व्याचक्षाणः क्षमापतिः । प्रावर्त्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ।
क्षीराभिधाच्छब्दविद्योपाध्यायात् संभृतश्रुतः । बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ।
भूपतिरात्मनः स्पर्द्धां चक्षमे न स कस्यचित् । आत्मनस्तु बुधैः स्पर्द्धां शुद्धधीर्बह्वमन्यत ।
तावत्पण्डितशब्दोऽभूद्राजशब्दादपि प्रभुः । तैस्तैर्वेषैर्नतु क्वानि कालाकारवदान्वयौ ।
नृपतौ विद्वदायत्ते राज्यमात्मस्थकाङ्क्षिभिः । गृहा बभूवुर्विदुषां व्याप्ताः सेवागतैर्नृपैः ।
समग्रहीत्तथा राजा सोऽन्विष्यान्निखिलान् बुधान् । विद्वद्दुर्भिक्षमभवद्यथान्यनृपमण्डले ।
अध्यक्षो भक्तशालायां शुक्रदन्तस्य मन्त्रिणः । विद्वत्तया थक्कियाख्यस्तेन स्वीकृत्य वर्द्धितः ।
विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः । भट्टोऽभूदुद्भटस्तस्य भूमिभर्त्तुः सभापतिः ।
स दामोदरगुप्ताख्यं कुट्टनीमतकारिणं । कविं कविं बलिरिव धुर्यन्धीसचिवं व्यधात् ।
मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा । बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ।
सुस्वप्ने पश्चिमाशायां लक्षयन्नुदयं रवेः । देशे धर्मान्तराचार्यप्रविष्टं साध्वमन्यत ।
सचेताः संस्तवचक्रविवृत्तो बभूव सः । भावानां भुज्यमानानामास्वादान्तरविस्पृहः ।
अपश्यद्भिर्महास्वादान् भावान् स्वादविवेकिभिः । किं प्रियमशनादन्यत् पापैरन्यैर्विलोकिभिः ।
आढ्यस्य चिन्तां कृतान्तमरणोद्योगप्रियानिकृन्तं पुण्ड्रेषु द्रवपानमुल्बणमहानोहमनुप्रसूतेः ।
वीताभिरवर्त्तमसमान्यबलयामोदस्य याद्वग्भविक्रमावामां सुभगः स्वभावमहिमा निश्चेतसस्तादृशः ।
मन्त्रविक्रमयोस्तस्य दर्पणयोरिव । एकैव विदिता मूर्त्तिः सहस्रगणनां ययौ ।
अक्रुद्धेन विगुणामाज्ञां लङ्केश्वरात्पश्च राक्षसान् । तेनानयति जगदे दूतोमात्र पुरःस्थितः ।
सान्धिविग्रहिकः सोऽथ गच्छन् पोतच्युतोऽम्बुधौ । प्राप पारन्तिमिग्रासं तिमिमुत्पाट्य निर्गतः ।
प्रियमैत्री रामसख्या कृपाशालिस्वदाचिरं । स्वदेशमनयद्दूतैः सोऽभिन्नं विभीषणः ।
दूतं त्रिभिः पुरथित्वा सरोऽगाधश्च राक्षसैः । चक्रे जयपुरं कोट्टे विविष्टपसमं नृपः ।
पुरमध्यं महाकारं विहारञ्च विधाय सः । नगरान्तर्जयादेवीं पुण्यकर्मा स निर्ममे ।
तत्पुरे चतुरात्मा च शेषशायी च केशवः । विष्णुलोकस्थितिं त्यक्त्वा ध्रुवं बध्नाति सन्निधिं ।
अन्यत् कर्मान्तरं किञ्चित् कारयित्वा स राक्षसान् । पश्चात् कारुभिरेवाप्य इति शंसन्ति केचन ।
स हि स्वप्ने जलान्तर्भं कुरु द्वारवतीमिति । उक्तः कंसारिणा चक्रे विनिर्माणं तथाविधं ।
औदारवत्यधिष्ठानं राज्ये कोट्टं तथाख्यौ । अभ्यन्तरं जयपुरं ब्रुवेऽद्याप्यखिलो जनः ।
सन्तो पञ्चमहाशब्दभाजनं जगतीभुजः । तस्मिन् जयपुरे कोट्टे जयदत्तोऽव्यधान्मठं ।
राजजन्तुः प्रमोदस्य जामाता मथुरापतेः । आचाभिधाश्चरचयच्छुचिराचेश्वरं हरं ।
पुनः सम्भृतसामग्र्यो दिग्जयाय विनिर्ययौ । बलैर्जलधिवेलाद्रीन् द्राघयन्नलघुद्विपैः ।
सम्प्रविष्टोऽपि पूर्वाद्रिमविच्छिन्ना विभावसौ । भगीरथस्य गङ्गेव रेजे तस्यानुगा चमूः ।
धाऊँ प्रचण्डैश्चण्डालैरटन्तः कटकाद्बहिः । तस्यासन् यामिकारात्रौ सुप्तनिप्रमुखा नृपाः ।

सामान्यदिनयादित्य इति सञ्ज्ञापयन्नृपः । पूर्व्वोक्तां विनयादित्यपुरेणालङ्कृतं व्यधात् ।
अभ्युत्थितेन सहसा सहमाध्वसमाक्षिनां । श्रीरारोहति सन्देहं सहतामपि भूभृतां ।
भीमसेनाभिधानस्य स दुर्गं पूर्व्वभूपतेः । निःशस्त्रो यतिभिः सार्द्धं यतिलिङ्गी विवेश यत् ।
तं रत्नान्वेषिणं तत्र परिज्ञाय चिरस्थितः । भ्राता जज्जस्य सिद्धाख्यो गत्वा राज्ञे न्यवेदयत् ।
भूपतिर्भीमसेनोऽथ राजा कस्मादबन्ध तं । नक्रवाजगरो भीममिव भीमपराक्रमं ।
तस्मिन् वीरे तथा बद्धे धुर्य्ये पुरुषकारिणां । पौरुषद्वेषिणा जाने दैवेनोन्नमितं शिरः ।
जयापीडस्त्वसंमूढो व्यसनेऽप्यतिदारुणे । तांस्तान् सञ्चिन्तयन्नासीदुपायानुदयोन्मुखः ।
अत्रान्तरे नरपतेः पौराणामतिदुस्तरा । लूतामयकृता व्यापद्दपद्यत मण्डले ।
आमयः स्पर्शसञ्चारी तत्र व्यापादकश्च सः । देशदोषादतो जन्तून् लूताव्याप्तो विवर्द्धते ।
तदाकर्ण्य जयापीडो जातोपायप्रयुक्तधीः । स्वभृत्येनाभियुक्तानि द्रव्याण्यानीतवान् रहः ।
तैः पिष्टैः चक्रेऽसौ कैश्चैनत्पिष्टोऽथ कज्ज्वरं । वक्षस्तनपयस्थाङ्के क्षिप्रा स पिटकोऽभवत् ।
तं लूताव्याप्तमाकर्ण्य विरोधोपरिक्षिणां मुखात् । विपत्स्यते ध्रुवमिति ध्यात्वा देशाद्बहिर्व्यधात् ।
एवं स्वमतिसामर्थ्यात् सन्तीर्णो विपदर्णवात् । आसव्योमायसोद्दुर्गं ययौ परिपन्थिनः ।
यः सर्व्वकालसम्बुधः परिहृष्यमाणो मूलाङ्कुराद्यपि न जातु पुरस्करोति ।
व्यापत्सु शास्त्रविटपी स फलं प्रसूय पुंसः किलैकपद एव समात्यनर्थौ ।
ततोऽस्कन्दमिसन्धातुं विद्याविक्रमसंयुतः । मायाव्यरमुक्तिर्नाम राजा नेपालपालकः ।
अकृतप्रणतिस्तस्य प्रविष्टस्य स्वमण्डलं । अयात् सुदूरमध्वानं सैन्योऽपससार सः ।
जिगीषास्तस्य तु तथा तत्तत्पार्थिवनिश्चयः । पृथक् प्रयत्ननिर्वृत्ती नाभूत्सःकुमारिणः ।
संयुक्तापि कश्चिद्दृश्यं प्रतिदेशं स वैरिणं । शनैः कंपाते कलार्ण्णिगरान्विष्यन् जगाम सः ।
ततो निःशेषितापाये तस्मिन् कुर्व्वन् स दिग्जयं । आससाद्येसलाटं सिन्धोस्तस्मुपाविशयद्बलं ।
प्रतस्थे दिवसैर्द्विशैरथ पूर्व्वार्णवोन्मुखः । कर्षन् वेलानिलन्यस्तसितशुभ्रध्वजपटांशुमः ।
ततस्तस्मिन् सरित्पारे दक्षिणस्मिन् क्षमापतेः । तस्थावरपुडिस्सैन्यं स्वकरांकं प्रकाशयन् ।
सरिद्भिरीरवाद्रारि प्रवलं वीक्ष्य तद्दलं । प्रजज्वाल जयापीडः पीतसर्पिरिवानलः ।
स जानुदघ्नं निर्विघ्नं पश्यन्नस्य सरिज्जलं । अपूर्व्वत्वादभ्रमितः कुद्धस्तत्र व्यगाहत ।
मध्यं प्राप्ते नृपे पूर्णैः वेलया वर्द्धमानया । अकालेऽभूदगाधाम्भाः सार्णवाभ्यर्णगा सरित् ।
नरनागाश्वबहुलं तथा सैन्यं महीपतेः । प्रहृद्धया प्लाव्यमानं क्षणात् संक्षयमाययौ ।
नृपतिर्वीचिसंमर्दसंभ्रंशिताभरणांशुकः । बाहुभ्यां लहरीश्छिन्दन् जलैर्दूरमनीयत ।
एकस्य करुणाक्रन्दैः सैन्यस्यान्यस्य गर्ज्जितैः । सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिशः ।
विप्रकारी स दृतिभिः सन्नद्धैः सरितोऽन्तरात् । स चाकृष्य जयापीडं बबन्ध विहितास्रवः ।
दैवस्यास्मसुकृद्य नास्ति नियमः कोऽप्यानुकुल्यं प्रति व्यक्षन् यः प्रियमुत्कटं घटयते जन्तोः क्षणादप्रियं ।

क्षिप्रं दीर्घनिदाघवासरविपत्सन्तापनिर्वापणं प्रादुष्कृत्य घनात्ययैः प्रकुरुते विद्युद्विसर्गं च यः।
स कालगण्डिकातीराश्रयात्प्रावृड्वेश्मनि । निचिक्षेप जयापीडमात्मानं रक्षिणां करे ।
तथा काश्मीरिको राजा निमग्नो व्यसने पुनः । स किंकर्त्तव्यतामूढः शुशुचे गूढसद्मनि ।
कलावत्त्वं शशाङ्कोऽपि तेजस्वित्वमर्यमाश्रितं । न ददर्श यथा धीमान् स रन्ध्रं तथा नृपः ।
अपश्यन्निर्गतं किञ्चिदालोकव्यस्तलोचनः । आसन्नां तटिनीमासीदुपायांश्च स चिन्तयन् ।
अवस्थाविदकाश्चात्र ग्रथिताः पृथिवीभुजा । आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेऽद्यापि सूरिभिः ।
तथा तस्मिन् स्थिते मानी देवशर्मैव मन्त्रिषु । चिन्तयन् स्वामिसन्त्राणमनिशं पर्यतप्यत ।
भर्तुः स्वदेहत्यागेन स हितं कर्त्तुमुद्यतः । दूतैरारमुडेश्चक्रे प्रियवाग्भिः प्रलोभनं ।
जयापीडश्रिया साकं राज्यं कश्मीरमण्डले । दास्यामि तुभ्यमित्यस्य दूतैः स श्रावितोऽभवत् ।
प्राप्तेषु प्रतिदूतेषु पूर्णाशामथ संविदि । गृहीतकटको मन्त्री नेपालविषयं ययौ ।
स कालगण्डिकासिन्धोरर्वाचि कटकं तटे । स्थापयित्वा परं पारं ययौ मितपरिच्छदः ।
सामन्तैरग्रमायातैस्तां सभां सम्प्रवेशितं । सत्कृत्यारमुडिः प्रह्वं न्यवेशयत विष्टरे ।
अध्यास्यासन्दति क्षिप्रं प्रतिसृष्टः क्षमाभुजा । तद्विसृष्टोपचारस्तन्निनायावसथे दिनं ।
स चारमुडिभूभृच्च प्रीतिकांक्षी परस्परं । आसतां निर्जनेऽन्येद्युः कर्त्तव्यकृतनिश्चयौ ।
नृपमूचेऽथ सचिवो जयापीडार्जितं धनं । अस्ति सैन्ये तदाशानां तस्य वा विदितश्च सत् ।
दानेन सचिवा सोत्कास्तेऽस्य कृता विमोहयन् । तस्मात्त्वां प्रष्टुमिच्छामि क्व वसु न्यस्तमित्यहं ।
अत एव मया सैन्यं संहतं न प्रवेशितं । यदि तन्मध्यगाः शक्या न वस्तुं न्यासधारिणः ।
तस्मादेकैकमाहूय तेषु बद्धेषु सैनिकाः । कोपमज्ञातहृदया न यास्यन्ति विक्लवाः ।
एवं विमोहितात्तस्मात् प्राप्तोऽप्याज्ञां स लब्धवान् । बद्धस्य प्रययौ पार्श्वं जयापीडमहीभुजः ।
तदालोकनसंक्षोभं दर्शयन् धैर्यसागरः । रहस्तन्निर्जनं कृत्वा क्षिप्रं पप्रच्छ तं नृपः ।
अपि त्वया निजं तेजो भित्तिभूतं न हारितं । तस्मिन् हि सति सिध्यन्ति साहसानित्यकल्पना ।
स तं बभाषे निःशस्त्रो सन्मिलन्नेव व्यवस्थितः । अद्भुतं कर्म किं कुर्यां म्रियमाणेन तेजसा ।
मन्त्री तमूचे तेजस्वी राजन् निश्चितं तव । जानीहि तत्क्षणेनैव लङ्घितं विपदर्णवं ।
अपि वातायनादस्मात् पतित्वा निर्गमिष्यसि । पारं गन्तुं समर्थोऽसि सैन्यं यात्र निजं तव ।
राजा जगाद तं नास्मात् पतित्वोत्थीयतेऽश्मसः । विना दृतिं दृतिश्चात्र दूरपाताद्विदीर्यते ।
तस्मात्सायमुपायोऽत्र स च नाम विमानितः । वक्रं मन्ये तमुत्पातमनिर्मथ्यापकारिणं ।
इति निश्चित्य सोऽमात्यस्तमवादीन्महीपते । बहिः केनाप्युपायेन वह त्वं नालिकाद्वयं ।
प्रविश्यैकाकिनैवाथ द्रष्टव्यः सम्मृतो मया । सरित्तरणोपायः सोऽनुष्ठेयोऽप्यवहितं ।
श्रुत्वेति निर्गतो गत्वा पायूत्थानमिषस्ततः । सविलम्बं बहिर्वेलां तदुक्तामत्यवाहयत् ।
एकाकी सम्प्रविष्टोऽथ तं ददर्श च्युतं क्षितौ । विपन्नं गलमुद्बद्ध्य दृढया चेलचीरया ।

रुद्धो व्यापादिततनुः श्वासापूरितविग्रहः । आभेरोऽहं तव द्युतिमाभाद्य तरापगां ।
आरोढुमवरुह्याय स्वर्णाहिष्णीषपट्टिका । बद्धा मया तां प्रविश्य क्षिप्रमेव पतामि ।
सत्त्वनिर्भिन्नगात्रास्त्रलिखितामिति संविदं । दृष्ट्वा चाचारयत्कण्ठनिबद्धांशुकपल्लवे ।
॥ तिलकं ॥ विस्मयखेदयोः पश्चात् पूर्व्वं स सरितस्ततः । प्रवाहे पतितो राजा परं पारं समासदत् ।
प्राप्तसैन्यः प्रविश्याथ क्षणेनैव निनाय सः । तमशेषं सभूपालं नेपालविषयं वशं ।
रक्षितोऽपि स यावत्तमजानन् बन्धनाच्युतं । तावदेव कथाशेषं विषयस्तं चकार सः ।
नद्युत्कबन्धः स्वर्गस्त्रीमुक्तस्रक् तूर्य्यघोषवान् । भूपतेर्बन्धनागाराद्वै बभूव समरोत्सवः ।
दावानलोल्बणभुवा गिरयो निदाघे यत्रैव दुर्गमितरे परिवर्जनीयाः ।
तत्रैव सम्भवति सान्द्रहिमद्रवार्द्रस्विद्यत्तुषारशिखरी नितरां निषेव्यः ।
अज्जादीनां व्रणं यत्र अक्ष्णस्वामिद्रुणामहृत । तत्रैव मन्त्रिणस्थित्यं कृतिनो देवशर्मणः ।
सान्द्रिमदुमः सूनुः स पितुर्निजशर्मणः । तमोमयो भासुरस्य भानोरिव शनैश्चरः ।
रत्नाकरोपमे तस्मिन् सचिवेऽस्तमुपागते । प्राप्तामपि श्रियं मेने नृपतिर्हारितामिव ।
तस्य दिग्विजयस्यान्ते सा न क्वानिर्व्विनिर्य्ययौ । मानमात् पृथिवीभर्त्तुर्नामात्योऽपि क्रिया पुनः ।
चित्तं जितवतस्तस्य स्त्रीराज्यं मण्डलं महत् । इन्द्रियग्रामविजयं बहुमन्यत भूभुजा ।
कर्णश्रीपट्टमाबद्ध्य श्रीराज्यार्जिताहृतं । धर्माधिकरणाख्यस्य कर्मस्थानं विनिर्ममे ।
द्वितीयस्थलगञ्जाख्यं कर्मस्थानमपि व्यधात् । उपयुक्तं प्रयाणेषु गञ्जे दूरस्थिते निजे ।
किमन्यद्भूभुजावामनिवासिन्या जयश्रियः । सर्वाशाश्वधयोऽभूवन् विलासमणिदर्पणाः ।
पुनः प्रविश्य कश्मीरान् स भूपैः परिवारितः । चिराय बुभुजे राजा विजयोपार्जितां श्रियं ।
तं कदाचिन्नृपं स्वप्ने सर्व्वाशाविजयार्जितं । पुमान् दिव्याकृतिः कोऽपि व्याजहार कृताञ्जलिः ।
सुखं त्वद्विषये राजन् वसन्नस्मि सबान्धवः । नागेन्द्रोऽहं महापद्मनामा त्वां शरणं श्रितः ।
द्राविडो मान्त्रिकः कश्चिन्मामितो नेतुमुद्यतः । जलाकाङ्क्षिणि विस्तम विकलं मरुमण्डले ।
तस्माद्रक्षसि मां तस्मिन् स्वर्णधातुसुवर्ण्णगिरिं । स्वदेशे दर्शयिष्यामि स्फीतोपकृतिकारिणः ।
राजा स्वप्ने निशम्येति दिक्षु सम्प्रेरितैश्चरैः । कुतोऽपि प्राप्तमानीय तं पप्रच्छ चिकीर्षितं ।
दत्ताभयः स नागोक्तं यथावत् सर्व्वमुक्तवान् । सविस्मयेन भूभर्त्रा स्वयं भूयोऽप्यपृच्छ्यत ।
भूरियोजनविस्तीर्णान् सरसोऽप्यन्तरात् त्वया । नागः प्रभावोत्कृष्टः स निष्कष्टुं शक्यते कथं ।
स तं व्यजिज्ञपद्राजन्नचिन्त्या मन्त्रशक्तयः । तासेहि दृश्यते क्षिप्रं मन्त्राश्चर्यं विलोक्यतां ।
अथानुगम्यमानः स राज्ञा प्राप्तः सरोऽन्तिकं । अभिमन्त्र्याक्षिपत्तैर्ध्यानैर्बद्धाशोऽशोषयज्जलं ।
राजाऽपश्यत्ततः पङ्के लुठन्तं मानुषाननं । वितस्तिदघ्नमुरगं भूरिकृष्णाङ्गरागान्वितं ।
मन्त्रसङ्कोचितं राजन् दृष्टाश्यमुमिति ब्रुवन् । मा पहीरिति भूपेन सोऽभिधाय न्यषिध्यत ।
तूष्णीं राजाज्ञया याति मन्त्रवीर्य्येऽथ संहृते । सरोऽभूत् प्रागवस्थानात् पुनर्व्याप्तं दिगन्तरं ।

द्राविडं द्रविणं दत्वा विस्मयाच्चिन्तयन्नृपः । दद्याश्चाधाय्यसौ नागः कथं स्वर्णाकरं गिरिं ।
ध्यायन्तमेव तं स्वप्ने ततः प्रोवाच पन्नगः । केनापकारेण गिरिः स्वर्णसूर्दृश्यते तव ।
स्वदेशोऽयं विदेशोऽयमिति बुद्धेः प्रवर्त्तकः । अन्वयव्यतिरेकाभ्यां स्थित्यभावः शरीरिणां ।
शरणं त्वामहमगामवमानभयात् पुनः । शरण्येन सता तन्मे भवतैव प्रदर्शितं ।
उदन्वानिव योऽन्याभ्यो शायते संश्रितैः प्रभुः । का श्रीसतोऽन्या सोऽन्यैर्वैसेवामयेऽभिभूयते ।
याभिरन्याभिभूताभिरोचितस्त्रातुमक्षमः । तासां केनाभिमानेन स्त्रीणां द्रक्ष्याम्यहं मुखं ।
ये कारणमधर्म्माणां व्यामूढस्य भवाम ते । विडम्ब्यमानाः क्रीडार्थे ते वयं प्राकृता इव ।
अथ वा श्रीमदान्धानामप्रेक्षापूर्व्वकारिणां । यत्किञ्चन विधायित्वं पार्थिवानां किमद्भुतं ।
मन्यन्ते क्ष्माभुजः क्रीडामुन्नतानां विमानिनां । यावज्जीवन् मस्मामं मरणं त्वां विदन्ति ते ।
उपेक्ष्यपक्षे भूपानां मानः स्वार्थस्य सिद्धये । स तु प्राणानुपेक्ष्यापि याच्यपक्षे मनस्विनां ।
महतो येऽवमन्यन्ते घटन्ते च विमानितैः । मानस्वरूपाभिज्ञत्वं तेषां केनानुमीयते ।
भवन्त इव तत्रापि न वयं व्यर्थदर्शिनः । ताम्रधातुरसस्यन्दी दर्श्यते तद्गिरिस्तव ।
इत्युक्त्वा संविदं तस्मै स्वप्न एव सतां ददौ । यथा प्रबुद्धः प्रत्यूषे प्राप ताम्राकरं गिरिं ।
स तस्मात् क्रमराजस्याम्ताम्रमाकृष्य निर्ममे । शतन्दीनारकोटीनामेकोनं स्वाभिधाङ्कितं ।
पूर्णां कोटिशतं कुर्य्याद्यः स मां निस्तरेदिति । दर्पभङ्गाय भूपानां समयं स्थापयन्नृपः ।
समस्या इव स क्ष्माभृत् सार्वभौमैर्विवेष्टितैः । चिक्षेप तुम्ब्यनिर्माणकुण्ठत्वायेति भूभृतां ।
अथाकस्मान्महीपालः प्रजाभाग्यविपर्य्ययैः । त्यक्त्वा पैतामहं मार्गं ययौ पित्र्येण सोऽधुना ।
किं दिग्जयादिभिः क्लेशैः स्वदेशादर्ज्यतां धनं । इत्यर्थ्यमानः कायस्थैः स्वमण्डलमदण्डयत् ।
शिवदासादिभिर्लुब्धैर्धनस्थानाधिकारिभिः । प्रविवर्द्धिततृष्णस्तैः सोऽभूत्तामवशम्बदः ।
काश्मीरकाणामुत्पन्नं शिलाशास्त्रवधायकं । कायस्थवक्त्रप्रेक्षित्वं ततः प्रभृति भूभृतां ।
मन्त्रमन्य सप्तभिर्नुर्योऽभूत्तत्तत्कृपायकैः । वामव्यवस्थचिन्तायां स एव स्थैर्य्यमाययौ ।
यत् सतां प्रथमादायि पापस्योपदिदेश तत् । जयापीडस्य पाण्डित्यं प्रजापीडनशौण्डतां ।
स सौदास इवानीकलोकप्राणापहारकृत् । असत्यकृत्याभिहितो स्वप्नेऽपि न समाययौ ।
कृष्णः किन्त्विषमेतदेव हृदये शल्येति कोऽहन्नात् स्वैरिण्यः चितिपाश्च धिक्चपलतां क्रौर्य्येष्व कुर्य्युः सकृत् ।
पापाक्रान्तधियो भवन्त्यथ यथा सान्वयात् स्पृशन्त्योऽपि ता दृश्यन्ते न च ते यथा स्वपितरो घ्नन्तोऽपि शान्तत्वपाः ।
लोभान्धामात्यया क्रौर्य्यं स ययौ वत्सरत्रयं । सह कार्यकभागेन यथाहार्षी स्वकृतफलं ।
लब्धलब्धस्वधीर्भूभृत् स्वल्पवित्तत्वप्रदान् । सर्व्वस्वहारिणो मेने कायस्थान् हितकारिणः ।
सामुद्रास्तिमयो नृपाश्च सदृशास्के प्रत्यागमाः स्वस्मादेव कणान् घसस्य जहतो जानन्ति ये दाहतां ।
सर्व्वस्मात् स्फुटलुण्ठितादितरतो लेशात् किलान्येऽपि ये दुष्कायस्थकुलस्य हन्त कलयन्त्यन्तर्हिताधायितां ।
सर्व्वकालं ब्राह्मणानामेवाधैर्य्यमकुण्ठितं । निस्त्रिंशस्य बभूवुर्ये तस्यापि परिपन्थिनः ।

देशान्तरं प्रयातेभ्यो ये श्रेयांसो व्यरंसिषुः । विक्रोशन्तोऽनुसरणाद्दूरणादपि पार्थिवः ।
विप्राणां शतमेकोनमेकाहेन विपद्यते । निवेद्यमेतदित्यूचे कोर्णाकास्तोऽथ पार्थिवः ।
विपर्यस्तचरित्रस्य तस्य क्रूरस्य भूपतेः । एवं स्तुतिविपर्यासः काव्येष्वपि बुधैः कृतः ।
नितान्तं कृतकृत्यस्य गुणवृद्धिविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ।
भाष्यव्याख्याक्षणे श्लोकैर्नवचयाहतैः कृतः । सोऽयं तस्य विपर्यासो बुधैरिव निवर्तितः ।
कृतविप्रोपसर्गस्य भूतनिष्ठाविधायिनः । श्रीजयापीडदेवस्य पाणिनेश्च किमन्तरं ।
तुलमूलापहर्ता च चन्द्रभागातटे स्थितः । विप्राणां शतमेकोनमग्रहणोत्तरक्षणे हृतं ।
ततोऽग्रहारहरणादेव प्रविरतोऽभवत् । बालव्यालां कृतां भूमिं नतु निःशेषतो जहौ ।
अथ विज्ञप्तिसमये तुलमूलौकसो द्विजाः । चुक्रुशुर्गात्तु तस्यापि प्रतीहारकराहताः ।
मनुमान्धातृरामाद्या बभूवुः प्रवरा नृपाः । अभ्यभावि तदर्येऽपि ब्राह्मणैर्न विमानना ।
सेन्द्रं स्वर्गं मंगलां क्ष्मां सनागेन्द्रं रसातलं । निर्दग्धुं हि क्षणेनैव विप्राः शक्ताः प्रकोपिताः ।
तदाकर्ण्यास्तसामन्तस्पष्टः क्ष्मापतिः । भुग्नामितिकभ्रूर्लेखो दर्पादवचनमब्रवीत् ।
भिक्षाकणभुजां कोऽयं शठानां वो मदज्वरः । यदर्थय इव भूय प्रभावव्यापकं वचः ।
श्रीमद्भ्रूभङ्गभीतेषु तेषु तूष्णीं स्थितेष्वथ । इद्दिलाख्यस्तमाह स्म मल्लनेर्जानिधिर्द्विजः ।
राजन् युगानुरूपेण भावभावानुवर्तिनः । आसितुस्तेऽनुसारेण न कस्मादृषयो वयं ।
आसन्ना विश्वामित्रो वा वसिष्ठो वा तपोनिधिः । त्वमगस्त्योऽथ वा किं स्या इति दर्पेण तं नृपः ।
ज्वलन्निव ततः स्फूर्जत्तेजाद्यप्रस्यविग्रहः । स फणीवात्फणस्थाप्यत् कोपान्नृपतिमब्रवीत् ।
भवान् यत्र हरिश्चन्द्रस्त्रिशङ्कुर्नहुषोऽपि वा । विश्वामित्रमुखस्तोऽहं तत्रैको भवितुं क्षमः ।
विहस्यावाच तं राजा विश्वामित्रादिकोपनः । हरिश्चन्द्रादयो यद्यप्यत्र क्रुद्धे तु किं भवेत् ।
पाणिना ताडयन्नुर्वीं ततः क्रुद्धोऽभ्यधाद्द्विजः । मयि क्रुद्धे क्षणादेव ब्रह्मदण्डः पतेच्च किं ।
तत् श्रुत्वा विहसन्राजा कोपाद्ब्राह्मणमब्रवीत् । पततु ब्रह्मदण्डोऽसौ किमद्यापि विलम्बते ।
तन्वयं पतितो जाल्मात्यथ विप्रेण भाषिते । राज्ञः कनकदण्डोऽङ्गे वितानस्खलितोऽपतत् ।
कृतव्रणः स तेनाङ्गे विसर्पिक्लिन्नविग्रहः । कीर्यमाणकृमिकुलः ककचैश्चाग्निरभूत् ।
अनुभाव्य व्यथा भाति निरयक्लेशवर्तिका । गणरात्रेण तं प्राणा काश्मीरतापगमा जहुः ।
ब्रह्मदण्डकृतं दण्डं भक्ता दण्डधराधिपः । अकण्ठदण्डलङ्घ्य यतो दण्डधरान्तिकं ।
तस्यानियतचित्तस्य त्रिंशतं परिवत्सरान् । एवं प्रतापिनः सैकान् भूभागा भूपतेरभूत् ।
तथाभूत्पलव्यद्राविणकणधाश्च कृतत्रपः चितिं स्वामुत्प्रमन्ना विदधति कुमार्गानुवर्तनं ।
क्रियन्ते काननात्मगविकृतकौतुक निवर्त्यथा श्रुते कस्मात् स्थिरनिरयजालप्रणयिनः ।
कृतपापं तमुद्दिश्य विपन्नमन्ततप्रभा । स्तोद्धाराय तस्मात्ता व्यधत्तामृतकेशवं ।
ललितापीडनामाभूत्ततो वसुमतीपतिः देव्यां दुर्गाभिधायां यो जयापीडादजायत ।

॥ युग्मं ॥ पीडादिगणनाख्यानमिष्यन्दोत्या नृपाय ते। पञ्चमाद्गणनाख्यानादशनाच्छादने ददुः।
एकसम्भाषणानन्दे यात्स्वन्येषु दिने दिने। पद्मतुल्यमुखावेक्षहृष्टो राजा तदाश्रितः।
ते राजन्यजितापीडे राज्योत्पत्त्यपहारिणः। पुरदेवगृहादीनां प्रतिष्ठाकर्म चक्रिरे।
सापत्न्यास्ते बभुर्नरे राज्यं स्वामिविवर्ज्जितं। निर्जने महिषं ग्राम्यं मिथः स्पर्द्धा वृका इव।
उत्पलेनोत्पलस्वामी तथोत्पलपुरं कृतं। पद्मेन पद्मस्वाम्यन्ते कृतिः पद्मपुरं तथा।
बधूर्व्यधत्त पद्मस्य गुणादेवी गुणोज्ज्वला। मठमेकमधिष्ठाने द्वितीयं विजयेश्वरे।
धर्म्मो धर्म्माश्रमे हेतुर्धर्म्मस्वामिविनिर्म्मिते। कल्याणवर्म्मा सत्कर्मा कल्याणस्वामिकेशवे।
दीनाराणां सहस्राणि पञ्चोपकरणं कृती। एकैकस्याः सुधीर्धेनोः कृत्वा सत्त्वो महाधनः।
पञ्चाशीतिसहस्राणि गवां दत्वा प्रकल्पयन्। कुम्भप्रतिष्ठासम्भारं योमस्वामिनं व्यधात्।
तस्यैकस्यैव सामग्र्याः कः सङ्ख्यां कर्त्तुमर्हति। भ्रातृणां किं पुनस्तेषां सर्व्वेषां भूरिसम्पदां।
द्रोहार्ज्जितास्तु वा लक्ष्मीः सुकृतोपार्ज्जिताथवा। सर्वेषां स्पृहणीयैव तेषां दातृतया तथा।
कृता देवगृहाश्रेण्यै तत्पार्श्वे ऽन्यमरास्पदैः। दिक्प्रान्तकृतसोपस्यकलसोपस्यमाश्रितं।
एकोननवते वर्षे स्वर्ग्गीये शान्तिमागते। निर्विघ्नमेतास्तेऽभुवन् षट्त्रिंशाब्दात्ययावधि।
अथ सम्मोत्पलकयोरुदभूद्दारुणो रणः। रुद्रप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः।
कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः। यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधं।
सम्मस्तनुर्यशोवर्म्मा संग्रामाग्रे व्यपाहरत्। स यत्र तेजः शूराणां नक्षत्राणामिवार्य्यमा।
अथोत्पलाख्याजितापीडं संग्रामापीडसम्भवः। अनङ्गापीडनामाभूत् कृतो सम्मादिभिर्नृपः।
सम्मोत्साहासहिष्णुत्वात् सम्भूतामर्षसंकृतः। तस्य राज्यं द्विपक्षासीत् सुखवर्म्मोत्पलात्मजः।
वर्षत्रयेणोत्पलके ततः प्रलयमागते। स चकारोत्पलापीडमजितापीडजं नृपं।
तेषामाश्रयजे राजसदृशानां महीभुजां। भृत्यापि भृत्याः कृतिनो विभूतिं कोऽपि लेभिरे।
सान्धिविग्रहिकस्तस्य रत्नोनाम विभूतिभाक्। तस्मिन् कालेऽपि यश्चक्रे रत्नस्वामिसुरास्पदं।
सेजुर्द्धीस्वामिमारादीन् देशानुत्सृज्य भूपतेः। विमनाश्चाग्रामभुजो मराद्या व्यवहारिणः।
राज्ञां कर्कोटवंश्यानां क्षीणप्रायमभूत् कुलं। वंशस्तूत्पलकस्यानां भुवि वैपुल्यमाययौ।
सामर्थ्यापन्नप्रायपार्थिवत्वोव्यपद्यत। विद्वेषात् सुखवर्म्माथ शूरकाख्येन स्वबन्धुना।
ततः शूराभिधो मन्त्री सुखवर्म्मात्मजेऽकरोत्। राज्ययोग्योऽयमित्यास्थां सगुणेऽवन्तिवर्म्मणि।
एकत्रिंशे स वर्षेऽथ प्रजाविप्लवशान्तये। विनिवार्योत्पलापीडं तमेव नृपतिं व्यधात्।
यत्कृते विफलक्लेशा आसन् पितृपितामहाः। पौत्रेण हेलया प्राप्ता सा सिद्धिः पुण्यकर्म्मणा।
वृक्षाः पयोनिधिपयोहरणप्रवृत्ता नित्यं हरन्ति किल ये विफलश्रमत्वं।
चित्रं क्षणादिह तदेकमसृक्षवेन सन्दर्शिना निखिलवारिधिपानलीला।
अश्वत तदुरमूर्द्धि राजलक्ष्मीघटितकटाक्षकृतादिपट्टबन्धे।

कनकघटमुखास्रवाभिषेकं झटिति पतन्मरवीनकश्चिदेव ।
सम्प्राप्तावुपदेष्टुमिन्दुतपसो युक्तं स्वतंत्रोद्भवैर्भूपालैर्नवराज्यतन्त्रमिव स श्रोत्रद्वये धारयन् ।
राजा मण्डनकुण्डलद्वयमिषात् स्वच्छातपत्रच्छलाच्छ्रीविष्टरपुण्डरीकघटितच्छायोदयो दिद्युते ॥ १२५ ॥
॥ राजानः ॥ १७ ॥ वर्षाः ॥ ७२८ ॥ आदितः राजानः ॥ ७० ॥ वर्षाः ॥ २७ ॥

इति श्रीकाश्मीरिकमहामात्यचम्पकप्रभुसूनोः कह्लणस्य कृतौ राजतरङ्गिण्यां चतुर्थस्तरङ्गः ॥

समाशतद्वये षष्ट्युते मासेषु षट्सु च । निर्देशाहेषु कार्कोटवंशे सप्तदशाभवन् । ७२०

---

## ॥ अथ पञ्चमस्तरङ्गः ॥



काश्येनेषु रुचिः क्रचेषु फणिनां पुंस्कोकिलस्येव ते गोभिः कण्ठतटस्य रुध्यति पुरो दृक् पश्य चक्षुःश्रुतेः ।
सन्धानेऽभिनवे मिथो भगवतोर्जिह्मा पृथक्स्यन्दिनी भिक्षार्थी सदृशाक्षरामपि वदन्नेवं गिरं पातु वः ।
अवन्तिवर्मा साम्राज्यं प्राप्य पाटितकण्टकः । चकार चरितैश्चित्रं सतां कण्टकितं वपुः ।
आसतां क्षितिपामात्यौ तौ द्वावपि परस्परं । आज्ञादाने परिस्पृष्टौ भृत्याचारापरिग्रहे ।
कृतज्ञः शान्तिमान् क्ष्माभृन्मन्त्री भक्तः स्मयोज्झितः । अभङ्गुरोऽयं संयोगः सुकृतैर्जातु दृश्यते ।
विवेका प्राप्तराज्यः स क्ष्माभृद्दीर्घ नृपश्रियं । अविलुप्तस्थितिर्धीमानन्त्यैर्धर्मांश्चमत्ययत् । ५
गोभुजां वल्लभा लक्ष्मीर्मातङ्गात्मङ्गनालिना । सेयं स्पृष्टां समुत्पाद्य दूषयत्युन्नतात्मनः ।
न नास्ति कश्चित् प्रथमं यः प्रदर्श्यानुकूलतां । सन्ताप्य तेन च रसं नीचप्रीत्येव नामया ।
चपलाभिः प्रवृद्धेयं स्ववेश्याभिः महाम्बुधौ । तदेकचारिणो हृत्समनया शिक्षितं कुतः ।
निःखेदानन्यगात् कांश्चित् सुचिरं संस्तुताप्यसौ । परलोकाध्वगान् भूपानपाथेयानबान्धवान् ।
हेमभोजनभाण्डादि भाण्डागारे यदर्जितं । कस्मादस्य न नाथास्ते लोकान्तरगता नृपाः । १०
अन्योच्छिष्टेषु पात्रेषु भुक्तेषु महीभुजः । कस्माच्च लज्जामवहन् प्रोर्वश्विम्नां मवा दधुः ।
खलेषु राजतस्थालकपालेष्ववलोकितेः । प्रेतभूपालनामाङ्कैः घृणा कस्य न जायते ।
कष्टाः प्रविष्टे ये कालपाशे कण्ठान्मुमूर्षतां । अयस्ता अपविचारस्य ते हाराः कस्य हारिणः ।
सन्दूष्य वाप्पैर्दुःखोष्णोच्छ्वासान् पूर्व्वैर्मुमूर्षुभिः । स्पृष्टान्तामलङ्कारांश्च सद्भावः कमाप्नुयात् ।
या वारिराशिसलिलान्तरसन्निधानसंसेवयापि सततं मलिनैव लक्ष्मीः ।
पात्रेषु गोरशिखिभागिषु सा विमुक्ता वैमल्यमेति हरिणीव क्रतावभृथे । १५
इति निध्याय नृपतिर्नीत्वा स्वर्णादितृणतां । निजैरचनिभिः प्रादाद्द्विजन्मभ्यः करम्भकं ।
साधु भूपेति वक्तव्ये हर्षात्क्रियीणवं द्विजः । साध्ववन्त्यिति वदन्नेकः प्रापाक्षयीन् सज्जन् ।

लक्ष्मीं कृत्वार्थिसात्कृत्स्नां कृतिनावन्तिवर्म्मणा । विभूतिश्चामरच्छत्रमात्रशेषा व्यधीयत ।
अनन्तसम्पत्सम्पन्नभूरिगोत्रजविभ्रमे । राजश्रीर्दुर्जरा तस्य भवने भुभुजोऽभवत् ।
विभुतः समरे भ्रातॄन् भ्रातृव्यांश्च विजित्य सः । चकार भूरिभिर्व्वारै राज्यं विगतकण्टकं ।
राज्यं निष्पाद्य निर्व्विघ्नमथ वात्सल्यपेशलः । विभज्य बन्धुभृत्येषु बुभुजे पार्थिवः श्रियं ।
भ्राता द्वैमातुरस्तस्य शूरवर्म्माभिधः सुधीः । शान्तिप्रियेण विनतो यौवराज्येऽभ्यषिच्यत ।
स्वाधृयार्हत्तिकर्णाख्यावग्रहारौ प्रदाय यः । शूरवर्म्मा स्वामिनश्च गोकुलश्च विनिर्ममे ।
सम्पूर्णपुण्यमहिमा सत्यमाद्याख्यमन्दिरं । पद्मच्छत्रप्रदश्चक्रे मठं सुकृतकर्मठः ।
भ्राता व्यधत्त नृपतेरपरः समराभिधः । केशवं चतुरात्मानं समरस्वामिनं तथा ।
द्वौ शूरावरजौ धीरविनयाख्यौ निजाख्यया । व्यधत्तां विबुधावासौ द्वावन्यौ गणनापती ।
भूत्वा बाकुलनाकस्यप्रभावासुभवौ भुवि । गतौ सविग्रहाविव हरावासाद्यसत्यतां ।
॥ युग्मं ॥ राजदौवारिकः श्रीमान्शूरस्वामीन्महोदयः । महोदयस्वामिनोयः प्रतिष्ठां समपादयत् ।
रामभाख्यमुपाध्यायं ख्यातव्याकरणश्रमं । व्याख्यातृपदके चक्रे स तस्मिन् सुरमन्दिरे ।
अमात्येन महीभर्त्तुः श्रीप्रभाकरवर्म्मणा । कृतं प्रभाकरस्वामिनाम्नो विष्णोर्निकेतनं ।
आयातेन शुकैः सार्द्धमन्दन्ता स्तहाट्टकेन यः । मुक्ताः प्राप्य प्रतिष्ठायां चक्रे ख्यातां शुकावलीम् ।
विश्वक्प्रसरा विद्या भूयः शूरेण मन्त्रिणा । सत्कृत्य विदुषः सभान्देश्योऽभिन्नवतारिता ।
ययुः क्षितिभुजो योग्यश्यमानामहर्द्धयः । बुधाः प्रहृष्टसत्काराभूयोर्ब्विविशुः सभां ।
मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्म्मणः ।
आस्थाने कृतमन्दारौ वन्दी शूरस्य मन्त्रिणः । सङ्कल्पस्मृतिमाधातुमिमामार्य्यां सदापठत् ।
अयमवसर उपकृतये प्रकृतिचला यावदस्ति सम्पदियं ।
विपदि सदाभ्युदयिन्याः पुनरुपकर्त्तुं कुतोऽवसरः ।
कृतः सुरेश्वरी क्षेत्रे सङ्कटहविधायिना । शिवयोर्मिश्रयोस्तेन प्रासादः सोऽव्ययस्थितिः ।
शूरेश्वरं प्रतिष्ठाप्य स्वर्वंशेन समुन्नतं । चक्रे शूरमठं श्रीमान् सम्भोगाय तपस्विनां ।
स्वकृते पत्तनवरे तेन शूरपुराभिधे । क्रमवर्त्त प्रदेशस्थोद्धकोऽभूद्विनिवेशितः ।
सुरेश्वरीप्राङ्गनतश्चक्रे भूतेश्वरं हरं । मठं शूरमठान्तश्च शूरजोऽरत्नवर्धनः ।
काव्यदेव्यभिधा शूरवधूः शुद्धाख्यया व्यधात् । सदाशिवं सुरेश्वर्यां काव्यदेवीश्वराभिधं ।
निर्मत्सरोऽवन्तिरासौ सोदरेभ्योऽसपात्यिनीं । शूराय दश पुत्राय नृपतिः प्रक्रियान्ददे ।
छन्दानुवर्त्ती भूपालो दैवतस्येव मन्त्रिणः । आसनाद्दर्पणोऽयासो क्षेत्रनामपदैयत् ।
येन विश्वैकसाराख्ये स्मृतानामपवर्गदे । भूरिभोगास्पदं राज्ञा तेनावन्तिपुरं कृतं ।
अवन्तिस्वामिनं तत्र प्रागराज्याधिगमात्कृती । विधाय प्राप्तसाम्राज्यः सोऽवन्तीश्वरं तदा ।
त्रिपुरेश्वरभूतेशविजयेशेषु भूभुजा । स्नानद्रोण्यो राप्यमय्यः तेन पीठत्रयं कृतं ।

शूरस्यापि नरेन्द्रं तं ध्यायतः स्वाधिदैवतं। तत्प्रियार्थमुपेत्याभूदूर्मिः प्राणाः सुतोऽपि वा।
तथा चार्चयितुं जातु यातो भूतेश्वरो नृपः। विभवानुगुणेष्वस्मिन् पूजोपकरणेऽर्पिते।
ददर्श पीठे देवस्य पूजकैरुपपादितम्। वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितं।
तदस्याः क्ष्माभुजा पृष्टास्तन्निवेदनकारणं। व्यजिज्ञपन् चितिन्यस्तजानुप्राञ्जलयस्ततः।
डामरो धन्वनामास्ति लहरे विषये बली। शूरस्य मन्त्रिणो देवसेवको यः सुतोपमः।
हृतेषु तेन ग्रामेषु निरवद्यप्रवृत्तिना। निवेद्यमेतद्देवास्मै भूतेशाय निवेद्यते।
अकाण्डशूलजनितां पार्थिवः कथयन् व्यथां। श्रुतमश्रुतवत्कृत्वा त्यक्तपूजोऽथ निर्ययौ।
पूजां सन्त्यज्य गमनं शूलं चाकस्मिकं प्रभोः। सहेतुकं विदन्क्रूरो वृत्तान्तान्वेषकोऽभवत्।
ज्ञाततत्त्वस्ततस्तूर्णं भूतेशाभ्यर्णवर्त्तिनः। क्रुद्धः समाहूतवतस्य भैरवस्याविशद्गृहं।
निषिद्धजनवाकुन्थो भूत्वा विरलपार्श्वगः। प्राहिणोद्धन्वमानेतुं ततो दूतान् पुनः पुनः।
स चितिं पत्तिपृतनासंमर्दैन प्रकम्पयन्। अप्रकम्पतनुः प्राप क्रूरः शूरान्तिकं पुनः।
तस्य प्रविष्टमात्रस्य मन्त्रिणः शूरचोदिताः। मुण्डं ससीतिनस्येव चिच्छिदुर्भैरवादयः।
आसन्ने सरसि क्षिप्ता रुधिरोद्गारि तद्वपुः। क्ष्मापतेः क्षालितामर्षो धीरः शूरो विनिर्ययौ।
तस्य श्रुत्वा शिरश्छेदं स्वपुत्रस्येव मन्त्रिणा। क्षीणमन्युः क्षितिपतिः सवैलक्ष्य इवाभवत्।
शूरोऽथ पृष्टकुशलो निर्व्यथोऽस्मीति भाषिणं। उत्थाप्य तत्पार्श्वं देवं पूजाशेषमकारयत्।
इत्थं समस्तकृत्येषु भावज्ञः स महीपतेः। अनुज्ञैव हितं तस्य प्राणात्ययाप्यसाधयत्।
परस्परमनुत्पन्नमन्युकालुष्यदूषणौ। न दृष्टौ न श्रुतावन्यौ तादृशौ राजमन्त्रिणौ।
श्रीमेघवाहनस्येव साम्राज्येऽवन्तिवर्म्मणः। अशेषप्राणिनामासीत्कुमारो दशवत्सरान्।
जलं जरद्भिः शिशिरं तटानीत्याकुतोभयैः। तत्काले सेवितः पृष्ठे पाठीनैः शरदातपः।
अनुग्रहाय लोकानां भट्टाः श्रीकल्लटादयः। अवन्तिवर्म्मणः काले सिद्धा भुवमवातरन्।
चरिते वज्रवक्त्र्ये येषामेकस्य पावनः। अयं प्रासङ्गिकः कश्चिद्वृत्तान्तो वर्णयिष्यते।
देशः प्रवलतोयोऽयं महापद्मसरोजलैः। कृत्स्नोभिन्नभवनः स्वल्पोत्पत्तिः सदाभवत्।
ललितादित्यभूभर्तुर्दैवयोगेन बलीयसा। किञ्चिदाकृष्टसलिलः प्राप्तोत्पत्तिं मनागतः।
जयापीडक्रमायाते स्वल्पवीर्येषु राजसु। सलिलोपप्लवैरासीत्पुनरेवावृता चितिः।
दीनाराणां दशशती पञ्चाशदधिकाभवत्। धान्यखारीक्रये हेतुर्देशे दुर्भिक्षविक्षते।
अवन्तिवर्म्मणः पुण्यैर्जन्तूज्जीवयितुं ततः। स्वयमन्नपतिः श्रीमान् सुय्यः चितिमवातरत्।
यस्याविज्ञानसम्भूतिसूर्य्ये कालेऽपि निश्चितं। अयोनिजत्वकृतिनश्चरितैर्भुवनाद्भुतैः।
पुरा रथ्यारजःपुञ्जं सम्मार्ज्जन्ती पिधानवत्। सुय्याभिधाना चण्डाली मृद्भाण्डं प्राप नूतनं।
तस्मिन् पिधानमुद्धृत्य सापश्यन्मध्यशायिनं। बालं कमलपत्राक्षं धयन्तं स्वकराङ्गुलीः।
माता कयापि त्यक्तोऽसौ सुन्दरो मन्दभाग्यया। अथेति चिन्तयन्त्यासीत्सा स्नेहाप्लुतमानसी।

अदूषयन्त्याः स्पर्शेन धात्र्याः शूद्रस्त्रियो गृहे । तया विहितवृत्तिः स शिशुर्वृद्धिमनीयत ।
स सुय्यनामा मतिमान् प्रवृद्धः शिक्षिताक्षरः । कस्याप्याभीरगृहपतेरर्भकाध्यापको गृहे ।
व्रतस्नानादिनियमैस्तं सतां चरयत्क्रमं । गोष्ठीषु विशदप्रज्ञं विदग्धाः पर्य्यवारयन् ।
तेषां कथास्ववस्थासु निन्दतां जलविप्लवं । धीरस्ति मे निरर्थस्तु किं कुर्य्यामिति सोऽब्रवीत् ।
उन्मत्तस्येव वदतस्तस्य तन्नियमाद्वचः । निशम्य भूभृच्चारेभ्यः स्थिरमासीत्सविस्मयः ।
ततस्तमानीय नृपः किं ब्रूष इति पृष्टवान् । धीरस्तीत्यादि राजाग्रेऽप्यवोचत्सोऽप्यसम्भ्रमः ।
वातुलोऽसाविति निजकोऽप्यथ महीपतिः । धियं दिदृक्षुर्विदधे तदायत्तं निजं धनं ।
कोशाद्दीनारभाण्डानि बहून्यादाय हेलया । ययौ मडवराज्यं स नावमारुह्य रंहसा ।
ग्रामे तत्र प्रवृद्धाम्बुनिमग्ने नन्दकाभिधे । एकं निक्षिप्य दीनारभाण्डं व्यावर्तत द्रुतं ।
सत्यं वातूल एवासौ सभ्येष्वपि वदत्स्वपि । वार्तां निशम्य तां राजा तच्चेष्टान्वेषकोऽभवत् ।
क्रमराज्यं समं प्राप्य देशे यक्षदराभिधे । अञ्जलिभ्यां निचिक्षेप दीनारान् सलिलान्तरे ।
यत्र तीरद्वयाद्रिभ्यः शैलनिर्लुठिताः शिलाः । चक्रुर्वितस्तां निष्पीड्य पयः प्रतिपथोन्मुखं ।
दुर्भिक्षोपहता ग्राम्या दीनारान्वेषिणस्तदा । शिलाः प्रवाहादुद्धृत्य वितस्तां समशोधयन् ।
एवं दिनानि द्वित्राणि पर्य्यायुक्त्या विलुप्य तत् । वितस्तासैकतः स्थानात्कर्षकाङ्कैरबन्धयन् ।
पाषाणसेतुबन्धेन सुय्येनाद्भुतकर्मणा । सप्ताहमभवद्बद्धा निखिला नीलजा सरित् ।
अधः प्रवाहं संशोध्य लुठदश्मप्रतिक्रियां । कृत्वा बद्धैः शिलाबन्धैः सेतुबन्धमपाटयत् ।
चिरकालनिरोधेन सोत्कण्ठेवाम्बुधिं प्रति । ततः प्रावर्तत जवाद्रम्यं सागरगामिनी ।
अम्बालाङ्का स्फुरन्मीना भूर्व्वभौ सलिलोज्झिता । व्यक्तकार्ष्ण्यामसत्त्वा निर्मेघेव नभस्थली ।
यत्र यत्र विवेदौघरोधं सलिलविप्लवे । तत्र तत्र वितस्ताद्याः प्रवाहान्नूतनान् व्यधात् ।
मूलस्रोतोयनिष्ठूतभूरिस्रोता बभौ सरित् । एकभोगाश्रयानेकफणेवासितपन्नगी ।
वामेन सिन्धुर्विषयाच्च वितस्ता दक्षिणेन तु । यान्त्यौ ते समगंसातां प्राग्वैन्यस्वामिनोऽन्तिके ।
वर्ततेऽद्य महानद्योः कल्पापायेऽप्यनत्ययः । सङ्गमो नगरोपान्ते स सुय्योपक्रमस्तयोः ।
अद्याप्यासां फलपुरपरिहासपुरस्थितौ । विष्णुस्वामी सङ्गमस्य वैन्यस्वामी च तीरयोः ।
सन्दर्भिन्नमाभ्यर्णप्राप्तस्याग्रतमस्य तु । योगशायी हृषीकेशः सुय्यस्याभ्यर्चितस्तटे ।
दृश्यन्तेऽद्यापि सरितां पूर्वस्रोतस्तटोद्भवाः । निषादाकृष्टनौरज्जुरेखाङ्काजीर्णपादपाः ।
स्फुरत्तरङ्गजिह्मास्ता नदीर्मार्गमनीनयत् । तास्ताः स्वेच्छानुसारेण मान्त्रिकः पन्नगीरिव ।
बद्ध्वा शैलमयान् सेतून्वितस्तां सप्तयोजनीं । महापद्मसरोवारि स चकार नियन्त्रितं ।
महापद्मसरः कुण्डाद्वितस्ता येन योजिता । जवान्निर्याति कोदण्डयन्त्रादिषुरिवाधुना ।
उद्धृत्य सलिलाद्भूमिं तस्मादादिवराहवत् । अनेकजनसङ्कीर्णान् ग्रामांस्तानतिधान्यधात् ।
पालीभिरश्मसंरोध्य ग्रामान् कुण्डसदृशान् व्यधात् । कुण्डलानीति सर्वांस्तान् समृद्धान् ब्रुवते जनाः ।

उत्खातकीलनिवहा लब्धोऽद्यापि प्ररूढयः । यच्छन्ति जलगम्भीरमग्नं सञ्चरदिभान् ।
दीन्नारभाण्डान्यम्भोभ्यो यदगाधजलान्तरे । नन्दके निर्गतजले सुलभान्यस्तदलभ्यत ।
अदेवमातृकान् ग्रामान् परीक्ष्य विविधाः क्षितीः । संविभेजे विभक्तेन नादेयेन स वारिणा ।
अभिषिच्य जलैर्ग्रामान् ग्रामान्मृदमुपाहृतां । या यावता क्षणेनागाच्छोषं तां तावता चदि ११५
कालेन मत्वा सेकार्हांप्रतिग्रामं जलस्रुतेः । परिमाणं विभागस्य परिकल्प्य निरत्ययं ।
चकार चानूलाद्याभिः सिन्धुभिः सर्वतोदिशः । सत्फलोदारकेदारसम्पत्संपन्नविभ्रमाः ।
॥ तिलकं ॥ न कश्यपेनोपकृतं न वत्सङ्कर्षणेन वा । हेलया मण्डलेऽमुष्मिंस्तत्सुय्येन सुकर्मणा ।
भूमेर्जलादुद्धरणं द्विजन्मेव तथार्पणं । सेतुबन्धोऽम्भसिस्रोतो यमनं कालियस्य च ।
चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्मजन्मसु । सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि । १२०
॥ युगलकं ॥ यस्मिन्महासुभिक्षेषु दीन्नाराणां शतद्वयी । धान्यखारी प्रसिद्धेतु रावर्गादभवत्पुरा ।
ततः प्रभृति तत्रैव चित्रं कश्मीरमण्डले । षट्त्रिंशता धान्यखारी दीन्नारैरुदितः क्रयः ।
निर्गताया महापद्मसलिलात्स्वर्गसन्निभं । वितस्तायास्तटे चक्रे स्वनामाङ्कं स पत्तनं ।
सुकृता स्थापिता तेन सरसि व्यासदिकटे । आसंसारं स्थिरा सारमर्यादाश्वपक्षिणां ।
सुय्याकुण्डलनामानं ग्रामं कृत्वा द्विजातिसात् । सुय्यामुद्दिश्य तन्नाम्ना सुय्यासेतुं स निर्ममे । १२५
तेनोद्धृतास्सलिलात्कूपु ग्रामाः सहस्रशः । अवन्तिवर्मसमुद्रैजयस्थलमुखाः कृताः ।
ईदृग्धैर्धर्म्यवृत्तान्तैः प्रवर्त्तितकृतोदयः । अवन्तिदेवः पाति स्म सान्त्वनेव वसुन्धरां ।
प्राणप्रयाणसंद्याससरागस्समतो यथा । चैत्रं स त्रिपुरेशाद्रिनिष्ठज्येष्ठेश्वराश्रितं ।
आत्मनस्तत्र निश्चित्य विपत्तिं चिरगोपितां । प्राणान्ते प्राञ्जलिः शूरे वैष्णवत्वमदर्शयत् ।
तेनान्ते भगवद्गीताः शृण्वता भावितात्मना । ध्यायता वैष्णवं धाम निरमुच्यत जीवितं । १३०
आषाढशुक्लपक्षस्य तृतीयस्यां क्षमापतिः । वर्षे एकोनषष्टे स आहवासमुपाययौ ।
तस्मिन् प्रशान्ते प्रत्येकं विभवोत्सिक्तचेतसां । तुल्यमुत्पन्नवंश्यानां राज्ये स्पर्धा भूयसाऽभुत ।
ततश्चक्रे प्रतीहारः प्रयत्नाद्रत्नवर्धनः । नृपं शङ्करवर्माणमवन्तिनृपतेः सुतं ।
कर्णपोतिलप्रामात्यस्तमनुजं शूरवर्मणः । तद्भ्रातुस्सुखवर्माख्यं यौवराज्येऽप्ययोजयत् ।
अतस्तयोरभूद्वैरं क्षितीशयुवराजयोः । यस्मिन् क्षणे क्षणे राज्यमासीद्दोलामिवाश्रयत् । १३५
मित्रमन्त्र्यादयो वीराः स्वामिकार्योज्झितासवः । यत्राभूवन् समत्वस्य परीक्षाक्षणलाभिनः ।
कुर्वतां स्वामिभक्तानां दानमानप्रतिश्रवं । सन्धिकाध्याक्ष ते यस्मादानकृत्यमशिश्रयन् ।
पिण्डस्पृहां परित्यज्याहङ्कृताः श्विचिताः क्वचित् । तावन्न वीततमसः स्वहस्तिमनुजीविनः ।
कथञ्चिदथ निर्जित्य युवराजं महौजसं । प्राप्तः स्वविजयोद्गारश्चक्रे शङ्करवर्मणा ।
सम्राट् समरवर्माद्यैर्व्यतीर्णसमरोऽसकृत् । कीर्त्तिं श्रिया प्रणयिनीं सहसाधिविवेद सः । १४०
अथ निर्जित्य दायादांल्लब्ध्वा लक्ष्मीं क्षितीश्वरः । जिष्णुर्दिग्विजयं कर्त्तुं श्रीमानासीत्समुद्यमः ।

तस्य कालवशाद्देशे प्रक्षीणजनसम्पदि । लक्षाणि नवपत्तीनां द्वाराभिक्रमतोऽभवन् ।
स्वपुरस्योपकण्ठेऽपि योऽभूत्कुण्ठितशासनः । स एव देशान्तरेषु राज्ञामाज्ञां न्यवेशयत् ।
गच्छन्नाम्नायविच्छेदसम्प्रदायः कटुक्षये । स्वप्रज्ञया समुन्नीतो राज्ञा शङ्करवर्म्मणा ।
तस्यैवं नरनाथानां पृतनाभिः पदे पदे । कुल्यापगेव कुल्याभिर्व्यग्रतीभिरवर्द्धत ।
दार्व्वाभिसारराजेन त्वरता समुपाश्रिताः । अद्रिद्रोण्यो न वाहिन्यस्तस्येनासादमादधुः ।
जनोऽस्वर्णैर्हरिगणैर्टक्कन्धरिगणं क्षणात् । अनासादितदुर्गं स चक्रे दुर्गान्तरातिथिं ।
लक्षाणि नवपत्तीनां वारणानां शतत्रयी । लक्षञ्च वाजिनामासीदस्य सेनापुरःसरं ।
स गुर्ज्जरजयव्यग्रः स्वपराभवशङ्कितं । त्रैगर्तं पृथिवीचन्द्रं निन्ये तमसि शाश्वतं ।
पुत्रं भुवनचन्द्राख्यं भीतिं प्रागेव दत्तवान् । स याभूत्प्रणतिं कर्तुं तस्याभ्यर्णमुपागतः ।
अथ तत्कण्टकं भ्राम्यद्भूरिमण्डलनायकम् । वीक्ष्य सम्मुखमायान्तं महार्णवमिवाञ्जनं ।
समागमक्षणे यस्मात्कम्पमानः स्वसम्भवं । पलाय्य प्रययौ दूरं निर्व्याणौजोविजृम्भितः ।
॥ तिलकं ॥ यमप्रतिमसौन्दर्य्यमवाप्याहुः पुराविदः । तमेवाद्राक्षुरुत्रस्ता नृपाः कालमिवोल्बणं ।
उच्चखानालखानस्य संख्ये गुर्ज्जरभूभुजः । बद्धमूलां क्षणाल्लक्ष्मीं ध्रुवं दीर्घामरोपयत् ।
तस्मै दत्वा टक्कदेशं विनयादङ्गुलीमिव । स्वगौरमित्रापाश्चीन्मण्डलं गुर्ज्जराधिपः ।
हृतं भोजाधिराजेन स साम्राज्यमदापयत् । प्रतीहारतया भृत्यौ भूते थक्कियकान्वये ।
दरत्तुरुष्काधिपयोर्यः कश्चिद्विग्रहयोः । हिमवद्विन्ध्ययोरासीदार्य्यावर्तइवान्तरे ।
समस्तेष्विव भूपेषु नमस्तेष्वन्तरापथे । यस्यैव विपुला ख्यातिर्मार्तण्डस्येव मण्डलं ।
स श्रीमांल्लखियः शाहिरल्लखानाश्रयः कुधा । निराकरिष्णुः साम्राज्यात्तस्य सेवां न लब्धवान् ।
एवं दिग्विजयं कृत्वा प्राप्तः स निजमण्डलं । प्रदेशे पञ्चसत्ताख्ये स्वनाम्ना विदधे पुरं ।
तस्य श्रीस्वामिराजस्य तनयोदकपथप्रभोः । पूर्णिमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ।
तया समं पुरवरे सुरराजोपमो नृपः । तस्मिन् शङ्करगौरीशसुगन्धेशौ विनिर्ममे ।
द्विजलयोर्नायकाख्यो गौरीशसुरसद्मनोः । चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरं ।
परकाव्येन कवयः परद्रव्येण चेश्वराः । निर्लोठितेन स्वकृतिं पुष्णन्त्यद्यतने क्षणे ।
स्वल्पसत्त्वो नरपतिः स्वपुरस्थापनाय सः । सारापहारमकरोत्परिहासपुरस्य यत् ।
ख्यातिहेतुः पट्टवानां पशूनां क्रयविक्रयौ । इत्यादि यत्सनेऽस्ति तत्तस्मिन्पुरेऽभवत् ।
राज्यप्रदेन नृपते रत्नवर्धनमन्त्रिणा । श्रीरत्नवर्धनेशाख्यो व्यधीयत सदाशिवः ।
चिरं नृपद्विपाः पूतभूतं यः कीर्त्तिनिर्झरैः । भवन्ति व्यसनाक्षिपं शुल्कानमनीमयाः ।
अथ क्रमेण नृपतिर्लोभाभ्यासेन भूयसा । अधीयमानचित्तोऽभूत्प्रजापीडनपण्डितः ।
आरब्धैर्व्यसनैर्भूत्वा क्षीणकोशाः क्षणे क्षणे । देवादीनां स सर्वस्वं जहारायासयुक्तिभिः ।
कर्म्मस्थाने पुरस्थयात्रादिधनहारिणा । तेनाट्टपतिभागाख्यगृहकृत्याभिधे कृते ।

धूपचन्दनतैलादिविक्रयोत्थं समादधे । द्रविणं देववेश्मभ्यः क्रयमूल्यकला बलात् ।
प्रत्यवेक्षां मुखे दत्त्वा क्लिष्टैरधिकारिभिः । चतुःषष्टिं सुरस्थानग्रामानाच्छिनदञ्जसा ।
ग्रामान्देवस्थयाच्यान् राजा प्रतिकरेण सः । स्वयं स्वीकृत्य योग्यर्धिं स्वां कार्पक इव व्यधात् ।
तुलां कृत्वा त्रिभागोनां वर्षदेयां सपर्षदे । भुक्तिकम्बलमूल्यादिदत्वादप्यधिकं ददौ । १७५
दिगन्तरस्थो ग्रामीणामूढभारानतागताम् । तद्भारैर्भारमूल्यं वर्षमेकमदण्डयत् ।
वर्षेऽपरस्मिन्निखिलान्भारमूल्यं निरागसः । तथैव संख्यया ग्राम्यान् प्रतिग्राम्यमदण्डयत् ।
इत्येषा रूढभारोक्तिः प्रथमं तेन पातिता । दारिद्र्यदूतीग्रामाणां या कथोद्गथा स्थिता ।
स्कन्दकग्रामकायस्थमासदत्त्यादिशङ्कुभिः । अन्यैश्च विविधायासैर्व्यधाद्ग्रामांश्च निर्धनान् ।
तुलापहारोपचयग्रामदण्डादिसङ्कटैः । इत्येव तेन संवाहो ग्रहकृत्ये प्रवर्त्तितः । १८०
व्यधत्त पञ्च शिबिरान्स तस्मिन्भिन्नकर्म्मणि । षष्ठं तथा गञ्जवरं प्रकटं लवटाभिधं ।
आत्मनो निरयं मूढः सोऽङ्गीकृत्येत्युपक्रियां । भाविनामकरोद्राज्ञां पापीयस्त्वानि योगिनाम् ।
निर्मित्तं मण्डलेऽमुष्मिन् क्षत्रियाणामनादरे । राज्ञां प्रतापहानौ च नान्यः शङ्करवर्म्मणः ।
मुख्येन गुणिना राज्ञां धनदान्या प्रयापदा । मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्त्तिताः ।
तथा कायस्थभोज्या भूर्जाता तन्मात्यवैचया । यथा सञ्जायते वर्णहरणादिव भूभुजाम् । १८५
तस्मिन् घोरे प्रजादुःखे कृपार्द्रः पृथिवीपतिं । पुत्रो गोपालवर्म्माख्यः कदाचिदिदमब्रवीत् ।
प्रदातुस्तात भवतः पूर्व्वं न्यासीकृतः स्थितः । वरो यः सत्यसन्धस्य सोऽधुना प्रार्थ्यते मया ।
कायस्थप्रेरणादैर्दैवेनाद्य प्रवर्त्तितैः । आयासैः श्वासमात्रैव प्राणवृत्तिः शरीरिणां ।
न च नामास्ति तातस्य काचिल्लोकद्वयोचिता । मनागपि हितप्राप्तिरेतया जनपीडया ।
अदृष्टविषयां वार्त्तां गच्छतां विदृणोति कः । दृष्टेऽप्यनिष्टादन्यत्र कर्म्मणा नेन दृश्यते । १९०
एकतो व्याधिदुर्भिक्षप्रमुखा विपदोऽखिलाः । प्रजानामेकतस्त्वेका लुब्धता वसुधापतेः ।
भूभुजोऽभ्यस्तलोभस्य श्रीः कैश्चिन्नाभिनन्द्यते । अकालकुसुमस्येव फलमप्यात्मनोज्झिता ।
दानस्य सूनृता सूक्तिर्विश्वसंवननं प्रभोः । लोभः पूर्व्वं तयोरेव विनाशाय महोद्यमः ।
प्रतापमार्यातं शोभां हेमन्ताहस्य वारिदः । स्वतिशेषां करोत्येव लोभश्च पृथिवीभुजां ।
दायादव्ययभीरुता परिवारस्त्र्यभिर्वन्धुजना भृत्याः प्रत्युपकारकातरमतेः कुर्य्युर्न कोऽपि प्रियं ।
राशीभूतधनस्य जीवितहृतो शश्वद्वनेरर्थिनां भभर्तुः क्रियते द्विषेव रभसा लोभेन किं नाप्रियं । १९५
राजा संवाहनामाथं नवायासो जनासृजत् । तदेव लोभप्रभवः प्रजानाश निवार्य्यतां ।
श्रुत्वेति राजपुत्रस्य भोजन्योमोज्ज्वलं वचः । स्मितधौताधरो राजा शनैर्व्वचनमब्रवीत् ।
तवाकृत्य विमन्त्रादि वचः सोऽजन्यपेशलं । स्मारयत्यद्य मामेतच्चित्तवृत्तिं पुरातनीं ।
कुमारभावे पूर्व्वं मे तवेवार्द्रान्तरात्मनः । प्रजावत्सलता वत्स पर्य्याप्ता पथ्यवर्धन ।
सोऽहं घर्मे वहन्त्वम्भ शीतेऽदन्नोष्णमंशुकं । पदातिरपथारथः पिता यस्यारितोऽभवं । २००

मृगव्याधा इवैः साङ्गमटव्यां कण्टकव्रतं । अनर्थाख्यं मां विलोक्य तमस्त्यविधुरपगाः ।
स तानुवाच सामान्यो भूत्वाहं राज्यमाप्तवान् । काले काले सेवकानां जाने सेवापरिश्रमं ।
ईदृग्दुःखमयं भुक्ता शाक्यन्यव्यथां भुवं । प्राप्तैश्वर्यो भवेन्मूढो गर्भस्मरतयान्यथा ।
उपायैर्गौढ़शौर्योऽहं कृतः पित्रा सुशिक्षितः । तेनापि प्राप्तराज्येन मयैवं पीडिताः प्रजाः ।
गर्भवासव्यथां जातः शरीरी विस्मरेद्यथा । प्राप्तराज्यस्तथा राजा नियतं पूर्व्वचिन्तनं । १०५
त्वयैव तस्मादेकोऽद्य वरो मत्तः प्रदीयतां । प्राप्तराज्यः प्रजापीडां माकार्षीस्त्वमतोऽधिकां ।
मास्त्वयमिति तेनोक्तः कृतान्योन्यस्मितैर्भटैः । राजाश्रैर्व्वीक्षितस्त्वासीत्कुमारो व्रीडतानन ।
त्यागभीरुतया तस्मिन् गुणिसङ्गपराङ्मुखे । आसेवन्तावराहत्तीः कवयो भल्लटादयः ।
निर्व्वेतना: सुकवयो भारिकोल्लटस्त्वभूत् । प्रसादात्तस्य दीनार सहस्रद्वयवेतनः ।
कल्यपालकुले जन्म तस्यैव प्रमाणितं । जीवो चित्तापभ्रंशादैर्देवी वाग्यस्य नाभवत् । ११०
वेष्टितस्यमुरुणापि प्राणस्यापि प्रवेशिनी । धान्यैकाया कृगित्यासीत्सुखराजस्य मन्त्रिणः ।
योऽयमार्य्योचितो नित्यं दुर्मेधासेविनः प्रभोः । कन्दानुहृत्या स प्राप नटस्येव विडम्बनां ।
॥ युग्मं ॥ सोऽनुगैः सह निर्दोषं जघान द्रोहशङ्कया । शूरं दार्व्वाभिसारेशं शर्व्वर्थी नरवाहनं ।
प्रजाभिशापे पतिते नृपस्योन्मार्गवर्त्तिनः । विंशद्दिशाः सुतास्तस्य व्यपद्यन्तामयं विना ।
वंशः श्रीर्जीवितं दारा नामापि पृथिवीभुजां । क्षणादेव क्षयं याति प्रजाविप्रियकारिणां । ११५
इत्युक्तं वच्यते चाग्रे व्यक्तमेतन्नु चिन्त्यतां । प्रनष्टं तस्य नामापि यथा क्रूरेण कर्म्मणा ।
नाम्ना पत्तनमित्येव प्रख्यातं स्वपुरस्कृतं । कस्यान्यस्याभिधाध्वंसि यथा शङ्करवर्म्मणः ।
स्वस्त्रीयः सुखराजस्य तेन द्वाराधिपः कृतः । वीरानकाभिधे स्थाने प्रमादादासदद्वधं ।
तस्योपात्त स्वयं राजा दस्यर्थाखामदोर्ज्जितः । वीरानकं समुन्मूल्य प्रविवेशोत्तरापथ ।
सिन्धुकूलाश्रयान्देशाञ्जित्वा भूरिभयातुरैः । कृतानतिर्महीपालैः प्रत्यावृत्तोऽभवत्ततः । १२०
उरशाभिधतस्तस्य वास्तव्यैरारिविक्रमं । निकेतहेतोः सैन्यानामकस्मादुदभूत्कलिः ।
गिरिशृङ्गाधिरूढेन श्वपाकेन निपातितः । वेगवाही शरस्तस्य प्रमादादविशङ्कलं ।
मुमूर्षुराप्तान् कटकं संरक्ष्य नयतेति सः । उक्त्वा कर्णीरथारूढः स्थानात्तस्माद्विनिर्ययौ ।
हीनदर्शनसामर्थ्यः परिज्ञाय शनैर्गिरा । कन्दर्पा वपुराश्लिष्य स्थिताया: श्वानभाषितः ।
पुत्रं गोपालवर्म्माख्यं न्यासीकृत्य च रक्षितुं । सिन्दुरेशं महादेव्याः सुगन्धाया यथान्वयं । १२५
फाल्गुणे कृष्णसप्तम्यां वत्सरे षष्ठसप्ततौ । उत्सार्यमाणविशिखो मार्ग एव व्यपद्यत ।
॥ तिलकं ॥ सुखराजादयः सैन्यं रक्षन्तः परभूमिषु । हस्तान्तैर्गोपयन्तस्तं यान्त एवाभवन् पथि ।
तं पञ्चसु दिवसेषु गुप्तं नयतोऽञ्जसा तावरैः । प्रतिप्रयाणं प्राप्तानां श्वासन्यासमकारयन् ।
षड्भिर्दिनैर्निजे स्थाने प्राप्ते वोलासकाभिधे । चक्रिरे गतचक्षाश्वास्ततस्तस्यान्त्यसत्क्रियां ।
निन्यः सुरेन्द्रवत्याद्या राज्ञो राज्ञामनन्वयु । वालाविलुः कृतस्तस्य जयसिंहाश्रयः कृती । १३०

द्वौ लोकाविव यस्य तं चक्रावनुजग्मतुः । इति सङ्क्षिप्तिनाङ्कैः सद्यःक्रियतामिव ।
ततो जुगोप गोपालवर्म्मा धार्म्मिकतोज्ज्वलः । सुगन्धया पाल्यमानः शत्रुघ्नो वसुन्धरां ।
मध्ये लालितकादीनां दुर्वृत्तानां वसन्नपि । अनतिक्रान्तबाल्योऽपि दुःसंस्कारान्न सोऽग्रहीत् ।
भूपालजननी भोगैर्वैधव्येऽधिकमुन्मदा । सा प्रभाकरदेवाख्यमशोकमत मन्त्रिणं ।
तया निर्भरसम्भोगप्रीतया स व्यधीयत । सौभाग्यपट्टश्रृङ्गारमौलिचक्रवर्त्याङ्कितः । २३५
कोशाध्यक्षेण रागिण्यास्तस्या लुण्ठितसम्पदा । तदा भाण्डापुरे तेन शाहिराज्यं व्यधीयत ।
स्वाज्ञातिक्रमिणः शाहेः कृत्वा कमलकाभिधं । तोमराणाय स प्रादाद्राज्यं लल्लियसूनवे ।
प्रत्यावृत्तोऽथ नगरं विवेश विजयोर्ज्जितः । शौर्य्यश्रृङ्गारवसतो साभिमानः स्वविषये ।
स राजजननीजारः साहङ्कारो जनार्ज्जनात् । मानक्षतिमधिक्षेपैर्वीराणां व्यधितान्वहं ।
कुट्टेण कामिना वेश्यावेश्मनीव नृपास्पदे । तेनावृते सम्प्रवेशो नाभूदन्यस्य कस्यचित् । २४०
शनैर्व्विज्ञातवार्त्तस्य धनमात्रापहारकृत् । सोऽभूद्विगतोऽत्यर्थं राज्ञो गोपालवर्म्मणः ।
विद्यते यत्र गञ्जेऽस्मिंस्तत्सर्वं शाहिविग्रहे । गतमित्यब्रवीद्भूपं स कोषगणनोद्यतं ।
अथ गञ्जाधिपो राजभीतः स्वर्गोदवेदिनं । रामदेवाह्वयं बन्धुमभिचारमकारयत् ।
तयाभिचारक्रियया भुक्तभूर्व्वत्सरद्वयं । गोपालवर्म्मनृपतिर्ज्ज्वालदाहो व्यपद्यत ।
व्यक्तीभूतकुकर्म्मा स राजदण्डभयाकुलः । रामदेवोऽवधीत्पापः स्वयमेव स्वविग्रहं । २४५
रथ्यागृहीतो गोपालवर्म्मभ्राताथ सङ्कटः । बभूव प्राप्तराज्यः स दशभिर्द्दिवसैर्व्यसुः ।
अथ वंशक्षये वृत्ते राज्ञः सङ्कटवर्म्मणः । प्रजाप्रार्थनया राज्यं सुगन्धा विदधे स्वयं ।
गोपालपुरगोपालमठगोपालकेशवान् । सा पुरस्य स्वनामाङ्कं विदधे धर्म्मवृद्धये ।
गोपालवर्म्मणो जाया नन्दा निन्दाव्ययोद्भवा । सिन्धुरण्यभवन्नन्दा मठकेशवधारिणी ।
अन्तर्व्वत्न्याः सती तस्मिन् पत्या गोपालवर्म्मणः । जयलक्ष्म्यां बबन्धास्यां श्वश्रूः सन्तानकाङ्क्षिणी । २५०
तस्यां विपन्नापत्यायां प्रसवान्तेऽतिदुःखिता । साभूदन्वयिने राज्यं कस्मैचिद्दातुमुद्यता ।
तस्मिन् काले महीपालविग्रहानुग्रहक्षमं । तत्र तत्र पदातीनां कृत्यसंहत्यभूत्कुलं ।
ततः समाश्रितैकाङ्गा स्वयं सम्वत्सरद्वयं । सुगन्धा विदधे राज्यं समन्वितेन तन्त्रिणां ।
योग्याय दातुं साम्राज्यं कस्मैचित्सा किलैकदा । मन्त्राय मन्त्रिधामन्तःस्थैकाङ्गानडीकयत् ।
अवन्तिवर्म्मवंशान्ते सम्भारं शूरवर्म्मणः । गर्ग्गायाः स्वकुटुम्बिन्याः सञ्जातं सुखवर्म्मणा । २५५
अनुप्रतो मे सम्बन्धिसुतादेवं भवेदिति । राज्ये निर्ज्जितवर्म्माख्यं कर्त्तुं तस्या मनोऽभवत् ।
॥ युग्मं ॥ तया तदुक्तं विषयव्यसनित्वेन आगमात् । राज्ञो दिवाशयतया योऽप्यनुत्थानदूषितः ।
नाम पङ्गुरिति प्राप राज्ये का तस्य योग्यता । इत्युदीर्ण्णाभवन् प्रश्नो यावत्केचन मन्त्रिणः ।
संहतैर्भेदनिर्यातैस्तावन्निर्ज्जितवर्म्मजः । दशवर्षः कृतो राजा पार्थस्तैश्चपदातिभिः ।
॥ तिलकं ॥ ते गञ्जाधिपवाक्यानां सुगन्धोत्पाटनाकृतं । प्रार्थितत्वममन्यन्त मानक्षतिविधायिनां । २६०

अथ पार्थं समुत्पाट्य तत्पिता पङ्गुराश्रितः । तन्त्रिभिः षण्णवते वर्षे पौषेऽभिषेचितः ।
माघेऽष्टानवते वर्षे सोऽभिषिच्य शिशुं सुतं । चक्रवर्माभिधं राज्ये शौचपुण्यो व्यपद्यत ।
पैतृकं वाञ्छतो राज्यं पार्थस्यानुचरा व्यधुः । एकाङ्गैः सह संग्रामं तत्र तन्त्रिपदातयः ।
मातुर्बप्पटदेव्याः स कञ्चित्कालं शिशुर्नृपः । मातामह्याः लिलिकाद्याः पाल्यस्यासीत्क्षमा इव ।
बाल्यादव्यक्तदोःशौर्ये तस्मिंस्तत्पालनं तयोः । निर्दोषमासीदण्डस्थफणिलालनसन्निभं ।
जातः पङ्गोस्तृगावत्यां नवमेऽब्देऽथ मन्त्रिभिः । चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः ।
निःस्नेहा मातुलामात्याः प्रययुः स्वार्थतत्पराः । अदत्त्वा तन्त्रिणां देयं तस्योत्पाटनहेतुतां ।
अदृष्टस्तोऽपि स स्वाम्यर्थविना भूरिधनार्पणं । गुणज्ञानिव वेश्यानां तन्त्रिणां नाभवत्प्रियः ।
वर्षे गते तमुत्पाट्य दुष्टोत्पत्तितया नृपं । वक्रधैर्यं पुनः पार्थं व्यधुस्तन्त्रिपदातयः ।
अभूत्सामन्वती वेश्या साम्वेश्वरविधायिनी । पार्थप्रिया तन्त्रिचक्रसंपदे ख्यातचक्रिका ।
कालापेक्षी चक्रवर्मा ततोऽर्थैरङ्कुरं बहु । एकादशाब्द्याषाढे कृतो भूयोऽपि तन्त्रिभिः ।
पार्थादीन् यैः समुत्पाट्य भुक्तं चक्रिकया पुरा । तैस्तैः स्थानेषु ये तेभ्यो जीवनाद्युपलेभिरे ।
पिता भ्राता च यैरस्य राज्यादुत्पाटितोऽभवत् । सम्बन्धिभ्योऽपि यैर्द्रुग्धं कन्यां दत्वेतरेतरं ।
अकरोद्दृष्टदोषाणां तेषामेव स नष्टधीः । मेरुवर्धनपुत्राणामधिकारसमर्पणं ।
॥ तिलकं ॥ कृतोऽक्षपटलाधीशस्तेन शङ्करवर्धनः । स्वहस्तत्वेऽप्यमात्योदाचिकः शम्भुवर्धनः ।
पौषे तस्यैव वर्षस्य धनाभावात्स तन्त्रिणां । अदत्तडिङ्गिकादेयः पलायिष्ट भयाकुलः ।
स्थिते मडवराज्यान्तस्तस्मिञ्शङ्करवर्धनः । राज्यार्थी तन्त्रिणां दूतं प्राहिणोच्छम्भुवर्धनं ।
आवर्जितैः स निःखिलैरधिकोत्कोचचर्चया । वञ्चयित्वाग्रजं राज्ये तैः स्वमेवाभ्यषेचयत् ।
तीर्थस्थितः स्वकुलजां तिमिरत्ति भुङ्क्ते मौनी वकस्तिमिमुपेत्य वनान्तवासी ।
व्याधान्निहन्ति तु वकं प्रभवन्ति ते ते पापाप्युपर्युपरि वञ्चनचञ्चुतायाः ।
भ्रष्टश्रीश्चक्रवर्माथ निशि श्रीढक्कवासिनः । एकदा डामराख्यस्य संग्रामस्याविशद्गृहं ।
ज्ञात्वा कान्तिविशेषेण राजानं स कृताञ्जलिः । प्रणम्य ग्राहयामास संभ्रमान्निजमासनं ।
राज्यभ्रंशादिवृत्तान्तमुक्त्वा साहाय्यकार्थिनं । तं विपत्स्थेऽसनं प्रह्वो विचिन्त्योवाच डामरः ।
तन्त्रिणां वा तृणानां वा राजन् का गणना रणे । त्वत्स्वत्वमार्थे सामर्थ्यं कश्चिच्च मम कर्मणि ।
प्राप्तोत्साहः पुनर्नूनमस्मानेव हनिष्यसि । विस्मरन्त्युपकारं हि कृतकार्या महीभुजः ।
ऊर्ध्वारोहे य आलम्बहेतुर्मूर्ध्नि क्रमन्ति तम् । कुठारिकानरस्कन्धमिवाधोगमनोन्मुखाः ।
धीधैर्यादिप्रकर्षेण येनोपक्रियते नृपः । प्राप्तोदयः स तेनैव शङ्कां वेत्त्युपकारिणां ।
अस्मिन् स्थिते विपद्भवेदिति सञ्चिन्त्य वर्ज्यते । मूढैः परिहृतैरापन्नेवको मधुलोलुभिः ।
सम्पद्यापत्सहायस्य विस्मृतोपक्रिया नृपाः । मध्ये प्रमादस्खलितमुत्पन्नं यदि कुर्वते ।
आमयार्तिरिपुत्रासमनुदादौ दृष्टवैकृताम् । तस्योदया श्रीभवेन व्यापा प्रणयमनुयायिनः ।

राज्ञः सतोऽपि नाम्नासो यस्यैनस्येव कर्णयोः । अविरुद्धप्रसक्तयो ध्वनन्ति मधुपा इव ।
दिवसे सन्निधानेन पिशुनप्रेरणा प्रभोः । ईर्ष्यालुना स्वैरिणीव रक्षितुं यदि पार्थ्यते ।
राजन् राजन्युपाध्याया देवी पश्चिमसद्मनः । तत्र प्रजागरः कर्तुमसमर्थास्ते शयने ।
कथञ्चिदङ्कि हृदये कुञ्चैर्विनिवेशिता । शिक्षा गौरवरूपेव राज्ञा विज्ञाप्यते निशि ।
न केनापि समुत्पाद्य शिक्षया विगतदीर्घया । पिपीलिका इव यत्ताः स्वापायैः प्रासकैरिव ।
जानन्ति हन्तुं हन्तव्यमाप्तं न तु दुर्गगं । एको वकः परं सत्यं द्रोहदृष्टिर्महीपतिः ।
न नाम कण्टकाकीर्णः कौटिल्यं लभ्यतां नयेत् । कालापेक्षी क्षितिपतिः शरीरमिव आर्थकः ।
नमन्नपि हरिर्हन्यादाश्लिष्यन्नपि पन्नगः । विहसन्नपि वेतालः स्तुवन्नपि महीपतिः ।
अद्रोहकृत्या तस्मात्त्वं द्रष्टव्याः सदा यदि । समेष्यन्ति तदेषोऽहं प्रातरेव पुरःसरः ।
तदाकर्ण्याब्रवीद्राजा लज्जाश्चित्तनिताम्बरः । स्वात्मेव यूयं संरक्ष्या मम पूर्वोपकारिणः ।
ततो निक्षिप्य चरणौ रक्ताक्तौ भवचर्मणि । कोशं चक्रतुरन्योन्यं सख्यै नृपडामरौ ।
अथ संहृतासंख्यचण्डडामरमण्डलः । चक्रवर्माकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ।
तस्मिन् क्षणे पुरस्कृत्य योद्धुं शङ्करवर्धनं । विनिर्ययुः सिताष्टम्यां चैत्रे तन्त्रिपदातयः ।
कालानुवृत्तिप्रच्छन्नं तेषां सन्नाहशोभितं । स तत्र पुरस्कर्तुं चक्रवर्मा स्वविक्रमं ।
अथ प्रवृत्ते संग्रामे घोरे पद्मपुराद्बहिः । जघान प्रेरिताश्वः पूर्वं शङ्करवर्धनं ।
हते सेनाधिपे तत्र शतधा तन्त्रिवाहिनी । प्रययौ पवनाघातप्रेरिता नौरिवार्णवे ।
पृष्ठानुसारिणोद्युक्तो नृपस्तेषामपाहरत् । गतिं तुरगवेगेन शिरःश्रेणीं तथासिना ।
भ्रमतः समरे वसुधीरपदाघ्नलच्छटाः । चक्रवर्म्मतुरङ्गस्य सटापाटलविभ्रमं ।
किमन्यत्पञ्चपञ्चाशन् सहस्राणि रणाङ्गणे । पतितानि क्षणादेव हतानां तत्र तन्त्रिणां ।
तन्त्रिणो रणसंरम्भपरिश्रान्ताः क्षमातले । खड्गपत्रकृतच्छाये शायिताश्चक्रवर्मणा ।
विशुद्धवंशैर्गुणिभिर्निहतैः संश्रितैः समं । अभूवन्यद्वीरशय्यां शूरः शङ्करवर्धनः ।
उदयं संहता एव संहता एव च क्षयं । प्रयान्तः स्पृहणीयत्वं तन्त्रिणः कस्य नागमन् ।
मानणीयानधृष्यांश्च महावंश्यान् महीपतीन् । ये दीनिव विलोकित्य भिक्षयन्तः क्षणे क्षणे ।
अनयन् कोशया भोज्यं साधन्तो जीविकाकृते । प्रागाविद्युत्पिण्डकाः कूरा इव ये गर्भकृन्तयः ।
ते तन्त्रिणः क्षणाद्दग्धा गूढवैरविधायिना । विमानना विविग्नेन चक्रवर्ममहाग्निना ।
॥ तिलकं ॥ अथ द्वितीये दिवसे भग्नानामपि तन्त्रिणां । वीरवान्दुन्दुभं चाञ्चत्करो जम्बुवर्धनः ।
तावन्मिलितधामन्तर्गत्वैकाकुलाकुलितः । सैन्यैर्नाना पणायातैर्नदद्भिर्व्योमदिक्पथः ।
वरणमध्येऽश्ववाराणां नृत्यन्निवाश्ववाजिना । वल्गां केनादकम्पं शिरस्त्रं वामपाणिना ।
सव्येतरहस्तायवेष्टनोद्भ्रामयन्त्रपुः । अङ्गस्य विस्मितार्कस्य भाभिर्दीपितकुण्डलः ।
कवचोत्सेधसंरम्भकण्ठाघातेन ताम्यता । वक्रभ्रुकुटिवक्त्रेण वदनेन भयावहः ।

तर्ज्जयन् कृतउड्डारांश्चञ्चन्कांशुच्छिताषणान् । शिरोऽभिसंश्रया चञ्चवालव्यञ्जनचामरः । १५०
भेरीरवैः श्रुतिं छिन्दन् पौराशीर्घोषरोधिभिः । संग्रामजयशोभाढ्यश्चक्रवर्मा विशत्पुरं ।
॥ कुलकं ॥ तस्मिन् सिंहासनं प्राज्यमाक्रम्यातिजयोर्जिते । बद्धा कृतस्थिरानिन्ये भूभटः शम्भुवर्धनं ।
राज्ञः पुरस्तात्तं शस्त्रपातभीमीलितेक्षणं । भांक्ष मदर्शयन् पापखण्डाव इव सोऽवधीत् ।
उज्झतां धर्ममर्य्यादां भृत्यानां जनकोपमान् । हन्तुं नरेन्द्रान्द्रोहेण प्रारब्धः शम्भुवर्धनः ।
प्राप्य निष्कण्टकं राज्यं चक्रवर्मनृपः क्रमात् । अजायत धृतोत्सेको नृशंसविषमक्रियः । १५५
स्वविक्रमकथासोचरोमन्यप्रियताश्रुतः । सोऽभवद्विटवन्द्यादिचाटुकारांत्रिधेयधीः ।
आत्मानं दैवतमिव स्तुतिमोहितचेतसः । जाताः प्राभवंस्तस्य विवेकविगुणाः क्रियाः ।
तस्मिन् प्रसङ्गे रंगाख्यः प्रख्यातो डोम्बगायनः । वैदेशिकोऽभवद्द्वाःस्थो विनीर्णावसरोवधि ।
प्राप्तान् सचिवसामन्तान्विन्यस्यन्तो यथाक्रमं । प्रतीहारान्नृपस्याग्रमनयन्त विविक्ततां ।
त्रिधभौ धवलोष्णीषा सभा दीपप्रभोज्ज्वला । शेषशय्येव मणिभिः कृतालोका फणाङ्कुरैः । १६०
कृतावरोधधम्मिल्लमालान्दोलनकेलिभिः । प्रदोषपवनैश्चक्रे शिशिरैर्घ्राणतर्पणं ।
जातगीतदिदृक्षाणां गवाक्षाक्रान्तयो बभुः । चामरादिभिर्व्वक्त्रैरवरोधमृगीदृशां ।
हारकङ्कणकेयूरपारिहार्यादिशोभिना । स्वच्छन्देनानुयातोऽथ प्राविशत् डोम्बगायनः ।
हंसीनागलता चास्य सुते ललितलोचने । चक्रतुः कौतुकोद्ग्रीवां सभां चित्रार्पितामिव ।
तयोर्व्विलासवलितैर्ललितापाङ्गविभ्रमैः । द्वितीयपुष्पप्रकरोव्यकीर्य्यत सभान्तरे । १६५
गायनैर्जयजीवेति कृतकोलाहलैरभूत् । सदः सशब्दं कुर्व्वद्भिस्तत्तन्नृपगुणस्तवं ।
भुक्तोत्तरोचितोदात्तस्वच्छमम्बरचारिणः । वंशैरागविशेषस्य दत्ते स्थाने ततः शनैः ।
अविक्रियशिरःकम्पभूनेत्रभ्रमशोभितः । अभिन्नद्व गायन्त्यौ गीतध्वनिरजृम्भत ।
अथ ताम्बूलरागमन्थरागनिश्चलमूर्च्छना । जातं राजकुरङ्गेण प्रमोदास्पन्ददृष्टिना ।
गायन्त्यौ भावमालक्ष्य तस्य स्निग्धमगायतां । अधिकोद्दीपिताभिख्यं विलासस्मितविभ्रमैः । १७०
राज्ञस्तयोश्च संसक्तचित्तयोरितरेतरं । दृग्व्यापारैः स्वसंवेद्यैः संलाप इव पप्रथे ।
नृपं हारितचित्तं तं विज्ञायैकः प्रियो विटः । ततः प्रसङ्गे प्रोवाच प्रीतिवृद्धिकरं वचः ।
देव गीतमिदं यातं संप्राप्तेन मनोरमे । कर्पूरपारीपतितं मैरेयमिव हारितं ।
गायन्त्योर्मार्ज्जितामितां रागाद्दत्तचतुष्किकां । अनयोः प्रतिमाव्याजाच्चुम्बतीव निशाकरः ।
करन्यस्तकपोलाङ्कमुद्रायन्त्या विमे भुवं । कटाक्षैः कुरुते व्योम्नि वैमानिकविमोहनं । १७५
आनन्त्या स्वास्थ्यं सर्व्वामनयोरेकयावयोः । असूयास्मितगर्भोऽयं कटाक्षः पक्ष पातितः ।
गायन्त्येकाननमुखी कर्णस्याशोककुड्मला । विपरीतरतोद्रेकनतारव्येव शोभते ।
सफलं तस्य तारुण्यमीदृश्यो निर्जने स्त्रियः । डोम्बव्याविरवे यस्य गायन्त्येवंविधैः स्वरैः ।
उपपत्तिपरित्यक्तशास्त्रानुष्ठानमोहितैः । एकसार्थप्रयातेभ्यः कथमेका विवर्ज्यते ।

नेत्रस्य नूपं श्रोत्रस्य ध्वनिं संस्मृतवान् यत् । तदृष्ट्वान्यकान्ताङ्गं स्पृशतो दुष्कृतं कुतः ॥ ३८०
अभिलाषाङ्कुरः सिक्त इव तैर्विटभाषितैः । राज्ञः स्वभावलोलस्य ग्रस्तप्राज्ञसमागमः ॥
ये विश्वाग्नितवर्णबन्धुरस्वराः सन्दर्भ्य गीतान्यलं तद्धूर्वस्थितिवापनं घनसमं पार्श्वे ध्वनन्त्युद्धताः ।
गीयन्तीं विपथावपातपरतां लब्धोदयैस्तैः क्षणात् सिंहावाग्धिगरम्भी च रभसाद्भूपालसिंहाविटैः ॥
वस्तुक्षणादनुपपत्त्युपपत्तियुक्तं कृत्वा अजान् यदिविमोहयितुं समर्थाः ।
न स्युर्विटा यदि कुतर्कपथस्थिताश्च नित्योदयेषु निरयेषु सृगाश्रयेयुः ॥
सन्तोष्य हारकेयूरकुण्डलैर्डोम्बमण्डलं । समागत्यागराधेयः शुद्धान्तमगमन्नृपः ॥
कान्ताऽस्याः क्षितिवल्लभोऽयमभिधत्युर्व्वीपतेरेकतो गूर्नेऽसावतिचण्डतापव्रयुतं डोम्बः स्वनामान्वितः ।
सध्ये यत्किमपीति गीतिरचना काव्यं यदेतद्विदो यत्क्षा वपयन्ति तान्विगणयन् कीर्त्यर्थिनः पार्थिवान् ॥ ३८५
वंश्यानुरागस्य महेन्द्रचापधाम्नोहरिद्रारसरञ्जनस्य । उपाङ्गगीतस्य च हारिणोऽपि सान्द्रैर्यमस्थैर्यहतप्रकर्षं ॥
दर्शनाभ्यासमम्बद्धरनुरागः क्ष्मापतिः । श्वपाककन्ये ते न पुनः प्राप निर्वृतिं ॥
गायन्त्यौ शयनोपान्ते शनैर्व्व्यहितचुम्बनं । नृपं रतिसुखाभिज्ञं तं हठान्ते प्रचक्रतुः ॥
समागमेन सद्येन तयोर्व्यात्ययोऽभिमा । सर्वे लपितसामर्थ्यः सलज्जोद्दहनाक्षमः ॥
रत्यन्तसुलभोद्भेदैर्निर्ग्गतैः स्वेदविन्दुभिः । भार्य्योपसङ्क्रमणं वपुस्तस्य व्यधीयत ॥ ३९०
रागान्धेन कृता हंसी महादेवी महीभुजा । भेजे राजवधूमध्ये वालव्यजनवीजनं ॥
तस्यार्धभुक्तमुच्छिष्टं ते यथा चक्रवर्मणः । नृपान्तराणामन्येषामप्यभूवन् सभासदः ॥
मन्त्रिणामक्षपटलप्रत्यमुख्याधिकारदा । प्रवृद्धिहेतुतां प्राप डोम्बसेवनचक्रिका ॥
मांसोत्सर्वितां केचित् श्वपाका न व्यधुः स्वयं । केचित्त्वकुर्वन्नीतिज्ञा राजकार्य्याणि मन्त्रवत् ॥
मन्त्रिणां तस्करागारा भोश्वपाकीश्वपचाः प्रियाः । किं न लोकोत्तरमभूद्रूपं तस्य क्वकर्मणः ॥ ३९५
ऋतुस्नातान्तं वासहानि श्वपाकी स्वांशुकान्यदात् । तदाच्छादनदृप्रेक्षामन्त्रिणः प्राविशन् सभां ॥
केचित् क्षितिभुजा वैरमन्त्रोक्तत्यापि तत्क्षणं । येषांभि श्वपचोच्छिष्टं तेऽभूवन् सोमपैः समाः ॥
मण्डलेऽस्मिन् प्रभावोयान देवान्यथमन् ध्रुवं । तदेव्यानि तदा नाचेच्छ्वपाकी प्रविशेत्कथं
तां रणस्वामिनं द्रष्टुं तिलद्वादश्यहे गतां । सामन्तेभ्यः स भिमामाप्य डोम्बराः परं ॥
राजकोदुम्बरूपानां डोम्बानां निर्गता मुखात् । राज्ञा मिषाज्ञा दुर्लङ्घ्या न कैनाप्युदलङ्घ्यत ॥ ४००
राज्ञा प्रदत्ते रङ्गाय हेलुग्रामेऽग्रहारवत् । लिलेख पट्टोपाध्यायो न यदा दानपट्टकं ॥
तदाक्षपटलं गत्वा रङ्गः कोपात्समब्रवीत् । रङ्गः स हेलुं दिर्णेति दासीसुत न लिख्यते ॥
लिलेख सोऽथ सभ्यामाद्रङ्गभङ्गतर्जितः । कोन राजनि दुर्वृत्ते भवेन्नीतिव्यतिक्रमः ॥
चण्डालागमनपापस्य पापः प्रचक्रम् स निष्कृतिं । विटैर्दास्याबहान्येव प्रायश्चित्तानि कारितः ॥
हिमेनेव हिमं शाम्येदुष्कृतेनैव दुष्कृतं । सोऽनुशिष्टो विटैरेवं दधत्यामरसारतां ॥ ४०५
पवित्रात्मर्यतां स्पृश्या स्पर्शपापं जिहीर्षुणा । तेनाहूयत विप्रश्च यो विन्ध्याश्रमवासिनः ॥

ततोऽपि पापिनोऽभूवन् केऽपि तस्मिन् क्षणे द्विजाः । तस्मादप्यग्रहारान् ये अग्रहर्त्तृभोगिनः ।
चक्रे चक्रमठं सोऽपि पापः पाशुपताश्रयं । तस्मिन् हतेऽर्द्धनिष्पन्नं तद्धूर्येदयोजयत् ।
पूर्वोपकारान् विस्मृत्य डामरांश्च निरागसः । नृपतिः श्वपचाकामी विश्वस्तांश्छद्मनावधीत् ।
हन्तुं व्याजेन विश्वस्ताः केचिड्डामरतस्कराः । तस्थुस्तस्यान्तिके द्रोहच्छिद्रानेहःप्रतीक्षिणः । ४१०
श्वपाकीशयनावासमज्ञावस्करमन्दिरे । शौचस्थितं तं निःशस्त्रं ते राज्ञो प्रापुरेकदा ।
अथ तैः प्राप्तसमयैरकस्मात्तस्य सर्व्वतः । क्षिप्रं न्यपात्यताशेषशातशस्त्रपरम्परा ।
सुप्तस्तटाद्ध्रदे भ्रष्ट इव निद्रालसेक्षणः । प्रबुद्धः शस्त्रपातैः स व्यमुञ्चद्भैरवान् रवान् ।
निःशस्त्रः शस्त्रमन्विष्यन् ज्वरद्रक्तजनिर्झरः । अनुद्रुतोऽरिभिर्धावन् शय्यावेश्म विवेश तत् ।
अप्राप्तहेतिं क्रन्दन्त्या श्वपाक्यालिङ्गिताङ्गकं । तत्कोशस्कन्नप्रार्द्धं जघ्नुस्तेऽनुप्रविश्य तं । ४१५
स्वैरेव प्रेरितादारैस्ते तस्य नृपतेः किल । मुमर्षोर्जानुनी स्वैरं शिलायां समचूर्णयन् ।
त्रयोदशाब्दे ज्येष्ठस्य शुक्लाष्टम्यां क्षपाक्षणे । श्वपाकभोग्यः स श्वेतावस्करे तस्करैर्हतः ।
उन्मत्तावंतिनामाथ पार्थसूनुर्दुराशयः । अभ्यषिच्यत वैधेयैः सचिवैः शर्वटादिभिः ।
श्वपाकीकामुके पापे निहते निशि तस्करैः । प्रजानां पाप्मना सोऽभूत्पापात्पापतरो नृपः ।
स्थगिता तत्कथापापस्पर्शभीत्या सरस्वती । कथंचित्तत्कुरस्यैव सेयं प्रस्थाप्यते मया । ४२०
आसीत्पितृकुलं तस्य भक्ष्यं दुर्नृपरक्षसः । और्व्वाभिधस्य हव्याशविशेषस्येव जीवनं ।
तस्यामिष्टङ्कराधानसटाङ्कारकरोटिकाः । प्राणस्कन्दादिवाद्याः सभायां मुख्यमन्त्रिणः ।
तेऽमात्याश्चारणत्वेन निर्लज्जास्समरञ्जयन् । कालान्तरेण येनेव भूमिपालैर्भविष्यते ।
पर्व्वगुप्तोऽभवत्तस्य सर्व्वेभ्योऽप्यधिकं प्रियः । आस्थाने सततं कुर्व्वन्नपाकृतकटीपटः ।
आतन्त्रविश्रवाद्दृष्ट्वा कीटप्रायान्महीपतीन् । पर्व्वगुप्तः सर्व्वदाभूद्राज्यावाप्तिकृतोद्यमः । ४२५
तदा निगूढराज्येच्छः सख्यं मुख्यैः स मन्त्रिभिः । पौतकोशैः प्रविदधे पञ्चभिर्भूभटादिभिः ।
भूभटः शर्वटस्कोजः कुमुदः सोऽमृताकरः । पर्व्वगुप्तेन सम्बन्धचक्रिरे कोशपीथिनः ।
गवाक्षमर्मि प्राप्तश्रीजलोत्रागलाङ्कुशः । संग्रामडामरस्येह योरक्षः ख्यातपौरुषः ।
पदातिमात्रो भूपेन दृष्टशौर्य्यः स संयुगे । महोदरो महाकायः प्रापितो मुख्यमन्त्रितां ।
यादृशी तेन ददृशे देवी श्रीः समरोऽन्तरे । तादृग्यक्षजया देवीत्यभिधानेन निर्ममे । ४३०
राज्यं निष्कण्टकं कृत्वा धूर्त्तेनापजिहीर्षुणा । प्रेरितः पर्व्वगुप्तेन भूभृच्चक्रे कुलक्षयं ।
तेन लुण्ठितसर्व्वस्वः पार्थस्तस्थौ कलत्रवान् । श्रीजयेन्द्रविहारान्तः श्रमणैर्दत्तभोजनः ।
शिशूहन् शङ्करवर्म्मादीन् भ्रातॄन् दारान्निरोध्य सः । तत्र स्थितानमन्नैस्तत्कालांस्तानकारयत् ।
उद्यतः पितरं हन्तुं मन्त्रिणोऽनुमतप्रदान् । वल्गुपटान् व्यधाद्भूमिगञ्जानितरान् पुनः ।
एकदा मन्त्रिसामन्तर्न्तिकायस्थसैनिकाः । पार्थं तदाज्ञामासाद्य निशायां पर्य्यवेष्टयन् । ४३५
स्नानक्षीणां वरां पत्नीं रज्जुधारां निपात्यते । आलिङ्ग्यमानां क्रन्दद्भिस्तर्णकैरिव दारकैः ।

केशानालम्ब्य कर्षन्तः शर्करोत्पाटिताङ्गकं । विपन्नं गोकुलाद्धान्तमिव निर्हत्य तं ग्टहात् ।
चुक्रुशामहत्मां क्रन्दन्तं निजपुर्नप्रविचहम् । चण्डालादेव निःशस्तं कुमुदाद्या नृपप्रियाः ।
पितरं निहतं श्रुत्वा राजा सञ्जातकौतुकः । प्रातः खर्पचैः सार्द्धं गत्वा चष्टोऽथ दृष्टवान् ।
अथाङ्गेऽस्य प्रहारोऽयं मदत्त इति वादिनः । तस्याये राजपुरुषाः शशंसुर्निजविक्रमं । ३५०
न्यक्कृत्य स्त्रीकृतो राज्ञा तदा तद्भृत्यनोदनाः । अपूपुषदत्यर्थगुप्तो देवगुप्ताभिधं सुतं ।
पार्थस्य निहतस्याङ्गे सोऽक्षिपत्क्षुरिकां ततः । रञ्जितो येन भूपालो जातहासोऽभवच्चिरं ।
डामरैर्लुण्ठितो देशः प्रणाशे चक्रवर्मणः । उत्पाद्य पापकार्यस्मात्तेन भूयोऽपि दण्डितः ।
सम्प्रेरितः कुमन्त्रिभिः शस्त्राभ्यासञ्चकार सः । पाटयन् क्षुरिकाघातैः कोट्टवीस्तनकोटरं ।
गर्भिणीनाञ्च जठरं गर्भान् द्रष्टुमपाटयत् । काठिन्यस्य परीक्षार्थमङ्गं कर्मकृतामपि । ३५५
प्रतिपन्नायदाहोगाद्धद्दा बधभयाद्द्विजाः । प्रत्यग्रस्तव्ययवहारांस्तस्मादपि नृपाधमात् ।
क्रूरपापानुरूपेण क्षयरोगेण पार्थिवः । तेनानुवाध्यमानोऽभूदपर्यन्तव्यथातुरः ।
व्यथया तस्य तादृश्या प्रजा एव न केवलं । तुतुषुर्निजशुद्धान्तमहिष्योऽपि चतुर्दश ।
अथान्तःपुरदासीभिर्यः कुतश्चिदुपाहृतः । क्षितिपालात्प्रजातोऽयमिति प्रख्यापितो मृषा ।
तं शिशुं शूरवर्माख्यं विनिवेश्य नृपासने । स्वं निक्षिप्य सामन्तसचिवैकाङ्गतन्त्रिणं । ३६०
कम्पनाधिपतेर्बद्धद्वेषः कमलवर्धनात् । विभ्यन्नवरराज्यस्था डामरोत्पाटनक्षमात् ।
आमयानिरयप्राप्तिः पितृहा पार्थिवाधमः । शुचौ पञ्चदशाब्दस्य प्रजापुण्यैः क्षयं ययौ ।
॥ चतुर्भिः कुलकं ॥ पितृघातिसुतो राजा जयस्वामिविरोचनं । आषाढाउक्रमसम्यां शिशुर्द्रष्टुं विनिर्ययौ ।
गता विरेजे राजश्रीर्बालस्य पृथिवीपतेः । कृपाणवेणीललिता छत्रचामरहासिनी ।
अत्रान्तरे जवायातैश्चारैरावेदितश्रुतः । सामन्तैर्नगरोपान्तं प्राप्तः कमलवर्धनः । ३६५
एकाङ्गतन्त्रिसामन्तस्यालहारकमादिभिः । नगरं प्रविशन् प्रान्तः स्वं सैन्यैररुध्यत ।
विरुद्धडामरानीकान् युद्धा मार्गेषु निर्गतः । श्रान्तोऽप्यसौ वैरिसेनामजयद्विक्रमोर्जितः ।
महत्तमस्ववाराणां विद्राव्य तुरगैर्मितैः । राजधानीमसंरुद्धः प्रविवेश ततः क्षणात् ।
तं भङ्गजयमाकर्ण्य सैन्यैस्त्यक्तं पलायितैः । एकाकिनं काप्यनयञ्जननी शिशुभूपतिं ।
प्राक्कर्मभिर्मोहितो वा प्रेरितो वा कुमन्त्रिभिः । नाभूत्सिंहासनारूढो मूढः कमलवर्द्धनः । ३७०
तदानीं स्वगृहान् यातो राज्यकामोऽन्यवासरे । समाहूयन् द्विजान् सर्वानचुचुदन्नीतिवित् ।
प्रौढं स्वकञ्च कुरुत नृपं कञ्चित् स्वदेशजं । मामेव कुर्युः सामर्थ्यादिति मूढः स चिन्तयन् ।
एकाकिनीं रहः क्षीवां लब्ध्वा दुर्भगयोषितं । अप्रौढोऽनुपभुञ्जानन्यदिने दूत्यार्थयेत यः ।
विभूतिं रभसावाप्तां यस्तु मन्यज्य तत्क्षणं । नीत्या कामयतेऽन्येद्युः ग्राम्यस्ताभ्यां परोऽस्ति कः ।
॥ युग्मं ॥ अथोत्पलकुले छिन्ने स्थूलकम्बलवाहिनः । अष्टक्षोणिनिभा विप्राः समगंसत गोकुले । ३७५
धूमनिर्दग्धकूर्चानां राज्ञस्तांस्तांश्चिकीर्षतां । राज्यव्यवस्थापन्यासस्तेषां चिरमवर्द्धत ।

चोरपृष्ठाभिधं ग्रामं प्राप्तस्य समरोत्सुकः । तस्यायं विक्रमोदयो रुद्रपालो विनिर्ययौ ।
श्वोऽव्यवस्थापिते युद्धे सैन्याभ्यां दरदीश्वरः । श्रीजापिण्डारकाख्यस्य नागस्य भवनं ययौ ।
दुर्मेधा वारणात्तत्र पार्श्वस्थैर्वारितोऽपि सः । अवमानस्य मत्स्यस्य गात्रे कुन्तमपातयत् ।
अथोज्जगाम गोमायुवपुः कुण्डाद्भुजङ्गमः । स च तं मृगयौत्सुक्यादधावद्दरदीश्वरः ।
तमापतन्तमालोक्य व्यवस्थामखिलां विदन् । आस्कन्दाशङ्कि भूभर्तुः सैन्यं युद्धाय निर्ययौ ।
अभूत्ततोऽस्त्रसम्पर्कजातानलसंहतिः । कृतस्वर्गाङ्गनोत्साहो वीराणां समरोत्सवः ।
तस्मिन्महाभटाटोपे शिरश्छित्त्वा दरत्पतेः । रुद्रस्य रौद्रमहसः संप्ररूढं यशः पुनः ।
समरे बधबन्धादि म्लेच्छराजाः प्रपेदिरे । सम्प्राप हेमरत्नादि पुनः काश्मीरभूपतिः ।
उत्तंसमुक्ताद्योताढ्यःकालिताकाशमण्डलम् । रुद्रपालो दरद्राजशिरो भर्तुरुपानयत् ।
आमोदयन्नवत्वेन कृतप्रायैस्तथा द्विजैः । तथा ह्येवंविधास्तस्य बभूवुरवदानिकाः ।
रुद्रपाले ततो लूतामयेन प्रमयं गते । अन्येऽपि शाहितनयाः क्षिप्रमेव क्षयं ययुः ।
पालवंशाभ्युदयविगमे शङ्काभयजुषोऽभवन् । देवी सूर्यमती भर्तुर्दर्पणस्थेव बिम्बिता ।
सुभटापरनामा सा गौरीश्वरविधायिनी । पुण्यं वितस्तापुलिने निर्ममे सुभटामठम् ।
गोहेमहयरत्नादिप्रदानैः सुब्रह्मन् द्विजान् । सदाशिवप्रतिष्ठायामदरिद्रांश्चकार सा ।
आशाचन्द्रापराख्यस्य कनिष्ठस्यानुजन्मनः । नाम्ना व्यधापि जामान्याशाप्रहारो मठस्तया ।
सिल्लणाख्यस्य च भ्रातुर्भर्तुश्चाभिधया सती । मठौ चकार यत्पार्श्वे विजयेशामरेशयोः ।
अष्टोत्तरं चाग्रहारशतं श्रीविजयेश्वरे । ब्राह्मणेभ्यो महापुण्यं विदद्भ्यः प्रत्यपादयत् ।
पत्युर्नाम्नाप्यग्रहारान् प्रददावमरेश्वरे । त्रिशूलवाणलिङ्गादिप्रतिष्ठाश्च विनिर्ममे ।
दम्पती राजराजाख्ये मृते पुत्रे प्रचक्रतुः । सदाशिवान्तिके राजवेश्म सन्त्यज्य तौ स्थितिम् ।
ततःप्रभृति सन्त्यज्य पूर्वराजकुलस्थितिम् । तत्रैव कृत्वा भूपालास्तत्रैव वसतीर्व्यधुः ।
पार्थिवस्याश्वशालीयाः प्रियप्राजितया प्रियाः । प्रमादैर्देवलुण्ठ्या च सर्वतः समतां ययुः ।
नर्मेश्वरतया भर्तुर्वल्लभो नर्मकोविदः । अलुण्ठयत्प्रजा नित्यं जल्लको नाम दैशिकः ।
मालवाधिपतिर्भोजः प्रहितैः स्वर्णसञ्चयैः । अकारयद्येन कुण्डयोजनं कपटेश्वरे ।
प्रतिज्ञा भोजराजेन पापसूदनतीर्थजैः । सततं वदनस्नाने या तोयैर्विहिताभवत् ।
अपूरयत्तस्य यस्तां दुस्तरां नियमाहितः । प्रहिलिका च कर्पूरकुम्भैस्तदारिपूरितैः ।
स तस्य पद्मराजाख्यः पर्णप्राप्तिकदैशिकः । प्रियताम्बूलशीलस्य त्यागिनो वल्लभोऽभवत् ।
तेन नागरखण्डादिपर्णविक्रयिणा नृपः । देशोत्पन्नधनं प्रायो निःशेषं दापितस्तदा ।
पद्मचन्द्रकशोभाङ्कमौलिसिंहासने नृपात् । बन्धावादत्त लब्धं धने च धनिकोऽधिके ।
तद्राजचिह्नमास्थानोपयुक्तं तस्य मन्दिरात् । आनीयमानं मासमेवापरे मासि कासभूत् ।
स्वकोशसञ्चयं दत्त्वा देवी सूर्यमती ततः । पद्मराजोद्भवाद्देयाद्वस्त्वाप्यधारयत् ।

शमिते चाम्पग्रामीयतक्षकादिभये तदा । प्रावर्त्तन्त पुनर्देशे व्यवस्था निरुपद्रवाः ।
ततः प्रभृति राज्ञ्येव राजकार्य्यैकतामभवत् । तस्यां शौर्य्यकथां त्यक्त्वा राजा कार्य्यकरः पुनः ।
भर्तुर्नारीविधेयत्वमस्यास्याभर्त्रजयच्छ्रिया । निष्कलङ्केन शीलेन मान्यत्वं मस्तकतामगात् । २००
भवभक्तिव्रतत्यागशीलादिभिर्गुणैः । कृतिनानन्तदेवेन सुनयोऽपि विनिर्जिताः ।
राज्ये तस्य महीभर्तुर्द्दर्विर्त्तीक्ष्णामलम्भयत् । पतिव्रतेव राजश्रीर्ध्यात्वायवनवोन्मुखी ।
क्षेमाभिधे राजगञ्जपूर्णे बालभञ्जकः । यथाहादश्रमाणादिप्रकारैर्दीकयन्मनम् ।
मन्त्री ततोऽभवत्साधुक्षेमतः केशवो द्विजः । चौथभ्रातरेणेव भूपालो येन भूषितः ।
भ्राम्यन् गतश्रीरेकाकी यश्च दृष्टो जनैः । भाग्याम्बुवाहनिर्जितो निविडाः कस्य सम्पदः । २०५
॥ युग्मं ॥ भाग्याधीनं धनं ज्ञात्वा मुधा मुग्धधियामयम् । कुर्वन्ति कर्मयोरैर्ष्याः मिथ्येव पृथुतां प्रति ।
प्रासादपालवैश्यस्य गौरीशविहारालये । भूतेर्हलधरो वश्यो वराहस्याभवन्सुताः ।
तेभ्यो हलधरः सूर्य्यमत्या विहितसेवनः । वृद्धिं दिने दिने गच्छंश्चेमे सर्वाधिकारिताम् ।
विधेयान् बुद्धियुक्तेन कुर्वतः क्षितिपस्य ताम् । सपत्नोऽभवत्तस्य मुख्यप्रेष्ठो क्षमापतिः ।
क्षेमेण सूचितं पूर्व्वं सपादायमुदग्रधीः । कर्मस्थानं स्फुटीचक्रे सर्व्वं स्थानधुरन्धरम् । २१०
अभूद्दर्णकमूल्यादिलेखनं कनकस्य यत् । राजायत्तं जनस्यार्थसञ्चयानां प्रकाशकं ।
स तन्निवारयामास भाविनां भूभुजां विदम् । स्थाने सञ्चितवित्तस्य दण्डायायासकारिताम् ।
भर्त्सितानथग्रामीयान्स्वसदारापहारिणः । कांश्चिद्व्यापाद्य स शमं निन्ये लोकस्य विप्लवम् ।
तेनायासवनानीतः कश्चित्स्वर्णैः सुरास्पदैः । शोभां मठापहारैश्च वितस्तामिव्रुपक्रमः ।
भ्रातरश्च सुतास्तस्य लक्ष्मीपरिचयोन्मदाः । द्विरदा इव न क्वापि दानप्रणयिनां जडाः । २१५
तद्भ्रातृपुत्रो बिम्बाख्यः श्रीमान्भीरो वराहजः । दृगधिकारकार्य्यार्थोद्दामप्रलयवारिदः ।
स डामरकुलाकालमृत्युः कम्पनागोऽभवत् । यस्याहवे अहत्प्राणान् पलायनपराङ्मुखः ।
चम्पायां सालभूपालमुन्मूल्यानन्तभूपतिः । तत्तद्रूपं जयी सव्यस्यराज्यमरोपयत् ।
मन्त्रद्युन्येन शौर्य्येण परदेशेषु भूपतिः । हठप्रवेशाभिरध्वमोऽभूत्स्फुरतोऽसकृत् ।
तुक्कात्मजस्य कलशस्यारब्धो विग्रहैनिकम् । अमोचयत् हलधरो युक्त्या तमापराधमुम् । २२०
पुरश्चाद्य प्रविष्टस्य वैरिरुद्धाध्वनो यथात् । कम्पनाधिपतिस्तस्य मार्गांशोध्य निर्गमम् ।
कालेऽनन्तमहीभर्तुर्वैरिविग्रहसङ्कटे । साहसान्युद्गतान्स्य तानि तानि क्षणे क्षणे ।
राजेश्वरो द्वारपतिः श्रीमान्भद्रेश्वरात्मजः । डामरैः कमराज्यस्थैरन्येऽपि बहवो हताः ।
बोद्धुं नीतिवृद्धा कार्यं भीत्या व्यवहरन्नपि । श्रूयतां निष्परिभवां को भुङ्क्ते नृपमन्दिरे ।
दुष्प्रवादास्पदीभूतो देव्या निविडसेवनात् । व्याघ्रावग्रहादिभिः कुट्टैर्हि हलधरोऽप्यभूत् । २२५
स राज्ञा ज्ञातसर्व्वस्वो बन्धनक्लेशमन्वभूत् । भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ।
नृपेण बन्धनात्त्यक्तं तं श्रीः प्रत्यागता पुनः । आलिलिङ्ग सितच्छत्रव्याजस्मितसितानना ।

भुक्त्वा समसुखं भूरीन्वर्षान् परमवैष्णवः। स चक्रायुधसायुज्यं ययौ चक्रधरे सुधीः।
स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ। सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कविबान्धवौ।
पितुः पितृव्यशाङ्गातुर्जातस्यानन्तभूभुजा। तन्मङ्गराजस्योत्सङ्गे मग्ना न्यासीकृतः शिशुः।
तन्मङ्गोऽपि विवृद्धिं तन्नीत्वा राष्ट्रं शिशुश्च तम्। पुनः प्रविष्टः कश्मीरानसौ चक्रधरे ययौ।
सर्व्वसाधारणीभूतभोगानां राजवीजिनाम्। नावज्ञातेयमभवन्नैव द्रोहकलङ्कितम्।
इन्दुराजात्मजात्सिन्धुराजो यो बुद्धराजतः। जातो मदनराजाख्यं वीरं पुत्रमजीजनत्।
अत्युत्सेकः सुतस्तस्य दरत्नृपतिमण्डलात्। विधुरे राज्ञि निर्यातः शौर्योद्रेकादखण्डितः।
तदानीं जिन्दुराज्याख्यो डामरोद्रेकखिन्नया। राज्ञ्या स्वयं गृहं नीत्वा साचिव्यं याचितोऽभवत्।
काणः शोभाभिधस्तेन शाहोदंगावहः प्रभोः। देवामध्ये डामरोऽथ हत्वास्कन्दं निपातितः।
कम्पनाधिपतां दत्वा ततस्तस्य प्रतापिनः। पार्थिवो राजपुर्य्यादीन् देशांश्चके करप्रदान्।
अनन्तभूभुजो राज्ये तस्तत्स्खलितमङ्कटे। आलम्बयष्टिप्रतिमो ययौ हलधरः स्वयं।
मुमूर्षुणा चक्रधरे तेन पार्श्वस्थितो नृपः। सजानिरुपदेशार्थी स तदेत्यमकथ्यत।
मा कार्ष्ट पररोहेषु रभसारम्भिमादृशम्। युक्त्या बलायुरादौ वा व्यपोढं व्यसनं मया
विशङ्को जिन्दुराजोऽयं पराध्यां वृद्धिमागतः। भेदं वः सह पुत्रेण जयानन्दो विधास्यति।
कथितं तेन तत् स्मृत्वा जिन्दुराजं महौजसं। विश्वेनाबन्धयद्राजा युक्तिमांस्त्याजितायुधम्।
अथ कालेन कलशस्यात्मकलुषिताशयः। मृत्योरसाधुसंसेव्ये प्रसक्तिं याचितोऽध्वनि।
तस्याभवद्विजयिस्यराजया नादयः प्रियाः। तस्यैकदा राजपुत्रास्त्वारः शाहिवंशजाः।
पुत्रोऽगच्छपतेर्नागनामा निकटसेवकः। सोऽपि तस्य जयानन्दः कौटिल्याच्च पक्षो ऽभवत्।
द्विजेन्द्रोऽमरकण्ठ तु यातेः शिवसमागतो। राजा प्रमदकण्ठस्य ययौ तज्जस्य प्रियतां।
दुःशीलस्य प्रकृत्यैव तस्याकार्योपदेशकृत्। गम्यागम्यविचारस्य परिहर्ताभवद्गुरुः।
गुरोर्गतविकल्पत्वं तस्यान्यत्किमिवोच्यतां। त्यक्तशङ्कः प्रवृत्ते स्वसुतासुरते ऽपि यः।
महासमयसञ्चारचतुरैर्धैरभीनितः। गण्यते स्वप्रभावोयैर्भैरवोऽपि न निर्भयः।
ते भट्टपादास्त्वासिन पतिता भग्नजानवः। विडालवणिजा स्वस्य ः शिरोहस्तार्पणैः कृताः।
पुराकृत्य विडालाङ्को वणिक् कश्चिदिहाभिधां। विडालवणिगित्यात्मनामविस्मारिकान्दधे।
यो व्याजमूर्खो वैद्यत्वगुरुत्वाद्धृतः क्रमात्। पादूकृद्रजकादीनां शिल्पिनां गुरुतामगात्।
सभट्टपादानुक्ताघांस्त्र्यके मूर्ध्नधिरोपयत्। श्रेष्ठी विडालविष्टोपघिवृगन्धोत्कटहरं।
एवं प्रकृतिनिःसारैरपि गर्वाङ्गिरन्वहं। आभ्यं स गुरुभिर्निन्ये दिवसोऽम्बुधरैरिव।
ये दीर्घजागरा रात्रौ भूरिभोजनसेविनः। अजीर्णपिशिताहाररिव्यदुर्गन्धकन्धराः।
अवस्करप्रणालाभाः पृष्ठे क्षिप्रमधःपथैः। श्रोत्रपात्र इव क्षिप्रमुत्सृजन्ति मधुनिर्झरं।
नृत्यमानोद्यवाद्यज्ञैस्तैः सार्द्धं कृतसेवनः। चारणो वेणुवादको योषितां धर्षयन् हठात्।

सन्देहं प्रथमं प्रयात्यभिजनं पश्चात्पुनर्जीवितं किञ्चान्यैरपि विप्रयोगविषयं त्रिगलने शीलस्य चिन्तामणेः ।
राजधानीमवाप्तस्य दुःशीलस्य महीपतेः । यथायथमेव तां वार्तां पितरावधिजग्मतुः ।
तौ रुदित्वा सुतस्नेहलज्जाशोकान्वितौ चिरं । निश्चयं बन्धने तस्य सदोषस्य प्रचक्रतुः ।
सर्वविद्यानिधिं ज्येष्ठं सप्तर्णां वणिकात्मजम् । स्थैर्यं राज्ये चिकीर्षू च निन्यतुस्तां निशीथिनीं ।
आकारितस्ततस्ताभ्यां प्रातः कलशभूपतिः । ऊचे विष्णुजयानन्दो साश्रू जनकाङ्घ्रयं ।
तन्मतेन जयानन्ददत्तहस्तः कथञ्चन । चञ्चीयमानो विष्णेन स पित्रोः प्राविशद्गृहं ।
पिता प्रविष्टमात्रं तं वक्षे दत्तचपेटकः । अभाग्यभागिन् जहिहि छुरिकामित्यथाब्रवीत् ।
एवं चाथ विसृज्याङ्गसन्धिमालम्ब्य पाणिना । सावष्टम्भं स्पृशन् वक्त्रं विष्णो राजानमब्रवीत् ।
राजन्यानवतां धुर्यो भवन्नपि भवान् कथं । न त्याज्यं मानिनां वेत्ति मानपक्षमहामतं
गृहीतश्चेतनेनायं राजपुत्रेण शिक्षिता । कष्टेऽस्मिन्मया स्वामी जीवता त्यज्यते कथं ।
पिता भवानयं पुत्रः कोऽन्योऽस्मिन्महीपते । मन्मनसिश्रितेऽमुष्य यद्योग्यं तद्विधीयतां ।
मुग्धं विमोच्य नृपतिस्तैवचोभिः स्निग्धकर्कशैः । विष्णुः स्वामिनमादाय निराकामस्तदन्तिकात् ।
विष्णुस्यापूजयन्धीरास्तद्धैर्यमतिमानुषं । अनन्तदेवस्याप्यये यदेवं स व्यजृम्भत ।
चण्डी नरपतेः पत्नी भार्यार्थवल्लभसखा । अप्राप्यजननीनामस्या तस्मिन्नवसरेऽभवत् ।
सा चेदासिद्ध्यैतद्युक्ता नाभविष्यत्तदेतरत् । नियमात्सर्वभावादा बन्धनात्कलशस्य वा ।
ततो विष्णेन कलशः सत्वरेण प्रवेशितः । अवरुन् दिव्याभिधानाया वल्लभाया निवेशनं ।
शिरोर्त्तिरस्य सञ्जातेत्युक्ता भीतं पतिं व्यधात् । सा प्राज्ञा शालहस्ताभ्यां तैलेनाभ्यक्तमस्तकं ।
व्याजेन तेन सर्वेषां सम्प्रवेशं निषिध्य सा । पतिं जुगोप विन्यस्य विष्णुं द्वारस्य रक्षणे ।
ततः समाजैर्विरता राज्ञी निर्भर्त्स्य भूपतिं । कुशलान्वेषणमिषात्तनयस्यान्तिकं ययौ ।
बन्धुं व्यधासौ राजानं तथैव प्रयया यदा । दत्तप्रवेशो विष्णेन नैकाक्येव सोऽभवत् ।
निषेधादनुगन्तॄणां ततः क्रुद्धो धराधवः । रुषित्वा विजयश्चैवं गन्तुं प्रावर्ततोद्धतः ।
तं प्रयातं सपत्नीकं प्राप्तं पद्मपुरान्तिकं । अवोचन्नेत्य तत्रस्था विद्यावटादयो द्विजाः ।
अधिकारं स्वयं त्यक्त्वा राजन् किमनुतप्यसे । कृतघ्नानुगृहीतो युक्तो न सतो नासतोऽपि वा ।
न च ते दुर्धरो त्यक्ताः प्रजा एतामयेत्यपि । ध्यात्वा सूनोः समुचिता कर्तुं दुष्टस्य वाच्यता ।
न यन्त्रपुत्रकस्येव शक्तिः कापि हि भूभुजः । भवेत्साधुरसाधुर्वा स प्रजानां शुभाशुभैः ।
उद्भवन्ति यत्पयोवाहा जलानि तद्वितोऽथ वा । वनस्पतीनां सदसत्कर्मपाकस्य तत्फलं ।
यथापर्यस्थितं पुत्रं त्यक्त्वोपेक्ष्यासितुं सुखं । कोपं त्यक्त्वा प्रविश्य तस्य घटते तत्कथं तव ।
धाराधिरूढसामर्थ्यः सर्वेशः शुचिमानपि । संस्पृश्यते क्षीणकोशः कृपाणइव कैः पुमान् ।
श्रुत्वेत्येष नृपो यावत्प्रत्याहर्त्तुं विचारवान् । तावत्सपुत्रेणाभ्येत्य सभार्येण प्रसादितः ।
अथ प्रविश्य नगरं सप्रमादापवर्जितां । सभार्यमन्तुरादाय लक्ष्मीं भूयो विनिर्ययौ ।

यथायुधतनुत्रादि स्वयं स्वीकृत्य निर्गतः । देवीं प्रतीक्षमाणोऽस्थात्परित्यायै ततः स्वयं ।
नानाप्रकारानारोप्य कोशाश्चेषु नृपाङ्गनाः । नार्य्यः सकृदपि स्वेहे निर्य्यान्त्यः पर्य्यवेषयन् ।
अज्ञातवार्त्तः प्राक् तूष्णीं तत्प्रस्थानेऽभवज्जनः । ज्ञातवार्त्तस्तदा त्वासीदाक्रन्दमुखराननः ।
प्रतिमोक्तुं पुरे ताभ्यां स्तनपुष्पाञ्जली जनः । वाष्पबिन्दुमिषादेत्य्नोढी धामर्च्छकणानिव । १५०
हा मातर्हा पितः क्वेत्थं गच्छतः परिदेविनात् । स्वसमादपरः शब्दो मार्गेषु न तदा श्रुतः ।
मार्गेऽस्तरास्तराक्रन्दविरतौ निश्शब्दध्वनिः । शैलानां शोकनिश्वासधूत्कार इव शुश्रुवे ।
तयोराक्रन्दितैः सत्यपथि सञ्जातसंस्तवौ । कर्णौ शुश्रुवेऽप्यघटणतामाक्रन्दितमिवाश्वतान् ।
पुत्रागमा ताहशौ तौ दृष्ट्वा मार्गे द्रुमौकसां । खगानां शावमरणमपि लोकोऽव्यगर्हत ।
तयोः पुत्रानयोस्तप्रचेतसोर्व्विजयेश्वरः । मनःप्रसादं संदृष्टः स्निग्धबन्धुरिवाकरोत् । १५५
तत्तत्र भाण्डागाराश्च यत्याशावमयार्पणैः । संविधानक्रियाभिश्च व्यग्रयोरगमद्दिनं ।
देशे कोशोपकरणपूर्णगोणीगणावृते । आमस्निग्धनगषण्डालीच्छन्नरथ्या इवापणाः ।
तत्काङ्गराजतुङ्गादि ज्ञातिपुत्रानृपात्मजाः । तं सूर्य्यवर्मचन्द्राद्या डामराश्चानुवव्रजुः ।
डामरान् चौरभूपादीन् राजानो नगरादिषु । स्थानेषु स्वेषु निक्षिप्य रक्षित्वे गुप्तिमानभूत् ।
विश्रान्तसर्व्वविक्षस्य श्रीमतोऽनन्तभूपतेः । प्रावर्त्तन्तात्सवैर्गन्तुं दिनानि विजयेश्वरे । १६०
राजपुत्रद्वयारोपाश्रितडामरमण्डलैः । कृतैरेव स्थितिर्बद्धा संविधे हर्षभूभुजः ।
वत्सरे षट्पञ्चाशे ज्येष्ठे मासि विनिर्गतः । आमात्य विजयक्षेत्रं स स्वर्गसुखमन्वभूत् ।
कलशस्तु गते राज्ञि प्राप वीतवसुं महीं । रत्नाढ्यां चलिते यातरत्नां निधिमहीमिव ।
स्वराज्यमुज्ज्वलीकर्तुं निस्वोऽपि विहितोद्यमः । चक्रे सम्यक्च विज्ञाद्यैः सम्मतानधिकारिणः ।
तेन सर्व्वाधिकारेषु जयानन्दो नियोजितः । द्वारे वराहदेवश्च वितस्तात्रपुरोद्भवः । १६५
योऽत्रम्पराधिकार्ध्यासीत्सिन्दुराजस्य कम्पने । राज्ञा विजयमित्रः स कम्पनाधिपतिः कृतः ।
यथाधिकारमन्यांश्च विनिधायाधिकारिणः । राजार्थचिन्तामारेभे संरब्धः चिरविग्रहे ।
जयानन्दः पदातीनां चिकीर्षुरथ संग्रहं । यत्नादनुचितेभ्योऽपि धनिकेभ्योऽग्रहीदृणम् ।
स्वीकृत्य पत्तीन्बिम्बादिराजपुत्रगणान्वितः । ययावन्तिपुरे प्राप योद्धुं हर्षनराधिपम् ।
अभ्यर्थ्य कारितो वेलां राज्ञा कारावििनिर्गतः । मिलिकावर्त्मना योद्धुं जिन्दुराजो विनिर्ययौ । १७०
तेषामुद्योगमाकर्ण्य क्रुद्धा हर्षमहीभुजं । ते डामराश्चराराद्याः संरम्भादुपतस्थिरे ।
अजायत न्यस्तगुडकी डस्तुरगमण्डला । शनैः सपाटवी कृत्स्ना संकटा विजयेश्वरे ।
ततः सूर्य्यमती बलात्पतिं परमकोपनं । ययाचे पुत्रवात्सल्यादयुद्धं द्विवदद्वयम् ।
अत्याप्रानय मन्त्र्यादीन् द्विजान्निषि क्षिप्य सा । तत्पुत्रेणातिवात्सल्यादिदमूचे रहः सुतम् ।
विनाशसंख्यं पुत्र कथं मतिविपर्य्ययः । तीव्रशोर्य्येण पिताद यदेवं योद्धुमिच्छसि । १७५
यस्य भूभङ्गमात्रेण हरद्राजादयो हताः । तत्प्रकोपानले कस्मादीहसे शलभायितुं ।

स तस्मात्रैव दुष्टात्मा कथ्यमानो समीपगैः। शुश्राव पितरौ नित्यं शोकाक्रान्तचितानन: ।
॥ युग्मं ॥ तौ दम्पती पुनर्देवमतुलापुत्रयुग्मदौ । चिताभिर्धनचर्य्याभिर्धनलापमनुश्चतां ।
यदा पुनस्तयोर्दोर्घमाध्यात्मा व्यहीयत । तदा दैवैः सदुष्पुत्रो रात्रौ वह्निमदापयत् ।
तेनाग्निनोश्वरोशस्य सर्व्वोपकरणैः समं । भस्मावशेषमभवद्विजयेश्वरपत्तनं । ४१०
सर्व्वनाशदुःखा दीना राज्ञी भर्त्तुः समुद्यता । तन्वङ्गुपेक्षणवे कथञ्चिज्ज्वलतो गृहात् ।
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितं । निःशेषं राजसैन्यं तदजायत दिगम्बरं ।
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषाद्नृत्यन्नवाक्षैरङ्गनालिङ्गिभिः समं ।
अतरत्कष्टसर्व्वस्वः स पारं सरितो नृपः । निमग्नस्तु सजानिस्तु दुस्तरे शोकसागरे ।
सम्प्राप्य प्रातरमुं रक्तलिङ्गं नृपात्मजा । आक्रीणात्तत्प्रसत्या टाकानां पार्श्वमीयुषां । ४१५
क्रीत्वा तम्प्रददौ पूर्व्वं भृत्यानां भोजनांशके । धनेन तेन निर्द्दग्धान्यपि धामान्यशोधयत् ।
भस्मकूलतलात्तावत्कांश्च स्वर्णादिभूभुजा । कथापि यावत्तादृक्ष यद्यत्तद्धि कौतुकं ।
राजा शून्याटवीभूते पत्तने तत्र सानुगः । मङ्गलकल्पितच्छत्रपटलाच्छादितोऽवसत् ।
तावत्पर्य्यसामर्थ्ये चिकीर्षीसत्पुरं नवम् । विना राज्ञोऽचितामाद्यां न सिद्धं हर्षभूपतेः ।
अदृष्टाभिभवो मातुरानुकूल्याश्रयो नृपः । परितापं पितुस्तैस्तैर्दुःसन्देशैः सदाकरोत् । ४२०
निर्व्वन्धाद्य पुत्रेण पर्णोत्सगमनं पिता । निर्व्वासनात्सुकैर्नोक्तः प्रस्यन्दनमुखैर्यदा ।
प्रभवन्त्या यदा चाभीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये प्रेर्य्यमाणः साधिक्षेपं क्षणे क्षणे ।
तदा जातु रहः कुर्व्वंस्तल्पे एकस्थितः स्थिते । उवाचानुकपूर्व्वं तामेवं सपरुषं वचः ।
तिलकम् ॥ अभिमानो यशः शौर्य्यं राज्यमोजोऽमतिर्धनं । मया जायाविधेयेन हन्त किं किं न हारितं ।
मिथ्यापकरणं नारीर्गणयन्ति नृणाङ्गनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः । ४२५
देवोऽस्यैवात्मसक्ताभिर्व्विमत्ताभिरसूयया । के नाम नाथ कान्ताभिः कृतान्तस्यातिथीकृताः ।
रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्म्मणैः । पुंस्त्वं काश्चिद्धरन्त्काश्चिद्वित्तं जन्तुरङ्गनाः ।
हरन्ति यात्रभिरिव स्वां पुत्रैरन्यगोत्रजैः । मत्ताः पयोधरोत्सङ्गात्तरङ्गिण्य इवाङ्गनाः ।
पश्यन्ति वेतनमिमे किङ्करैरोद्भूमेरिति । पोषयन्ति सुतान्भर्त्तृन् शोषयन्ति तु योषितः ।
सर्व्वकालं विदित्वापि दोषान्योषितस्तानमून् । प्रतिपन्थनुरोधेन मयेयं नावधीरिता । ४३०
प्रभविष्णुर्भिवत्येयमैहिकीः सुखसम्पदः । परलोकसुखस्याशामपि हन्तुं समोद्यता ।
वलीपलितयुक्तस्य नेदीयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं समोचितं ।
चपाकरकलामौलेः किन्त्विच्छपनक्षम । द्वारोपकण्ठसंसेवोत्कण्ठाकुण्ठोभवेत्कथम् ।
पुत्रो लोकद्वयत्राता कस्मान्यत्यैवृशो भवेत् । तीर्थात्प्रस्थापयन्मां यत् कुपथे स्ततमिच्छति ।
प्रतिभात्यवगीतोऽयं प्रवादो मेऽद्य चेतसि । सनयान्यकुलोद्भूतो यदयं सम्प्रवेशितः । ४३५
विसम्वादिनमाकारचारैर्व्वस्तुविरोधिनम् । पुत्रं पितुरसंयिरन्धं जानीयादन्यरेतसम् ।

न यत्प्रभुः प्रियं सत्यं गमनाद्यन्यवर्त्तयत् । उपालेभे समन्युश्च न सभृत्यः प्रियं प्रभुं ।
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां सोऽवेदंसन् बिम्बो विनिर्ययौ ।
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन् यथा । तथा बिम्बञ्चानन्दः स व्यवारोपयत्पदात् ।
तत्स्त्रीमात्रशेषां स्वां कृत्वा गच्छन्निवीयतां । कृतार्थो बिम्ब इत्युक्तिं नायशीमन्त्रिणां नृपः ।
निवर्त्तयिष्यति स्वामृत्विनयतं गमनाद्गमुं । इत्याशयास्यमादिश्य राजवर्ज्जंजनोऽखिलः ।
आस्कन्दं सङ्गमानोऽस्यादिश्याद्राजा बलोर्जितान् । क्षणस्पन्देऽपि चकितो निर्निद्रः पञ्च यामिनीः ।
तस्मिन् प्रपुराद्याते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां सद्यां प्राड्विवाके स मन्त्रिणां ।
ते तदाकर्ण्य यं मन्त्रं बिम्बार्थहरणेऽब्रुवन् । तस्याविधाने भूभर्तुरमन्यन्त नयज्ञतां ।
बिम्बादयस्तु निर्द्रोह यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ।
बिम्बोऽधिकं प्रहृष्टोऽपि देवस्यैव भक्तिमान् । पत्न्यां कलशदेवस्य सत्यंकारः सदाभवत् ।
एवं निर्व्वास्य बिम्बादीन्चिरावाप्तवैभवः । क्षिप्रं सूर्य्यमतीशापाज्जयानन्दः क्षयं ययौ ।
राज्ञो विरोधकृदङ्कं शापस्याप्यभिचारतां । प्रमयस्निन्दुराजोऽपि तस्मिन्नेव क्षणे ययौ ।
तेऽपि बिम्बादयः क्षिप्रमचिरावाप्तसम्पदः । प्रापुः पापोचितं सर्व्वे प्रमयं गोत्रमण्डले ।
आकस्मिकेऽथ प्रमये बिम्बः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ।
पलायितेषु कारायासेषु व्याजेन पाजकः । हतस्तदनुजाः सर्वा भुक्तक्लेशाः क्षयं ययुः ।
द्विचास्तद्वैधकाराणां नागशल्यमदनादयः । अदीर्घेणैव कालेन दुरन्तैर्धैर्भविष्यते ।
जयानन्दसहायोऽथ तत्पुत्रान् परिपालयन् । सर्व्वाधिकारी भूपेन वामनाख्यो व्यधीयत ।
यस्य तास्ताव्यवहृतीर्नीतिज्ञश्चाद्भुतावहाः । वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि धीमतां ।
यामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः । राजा कलशगञ्जाख्यं कर्म्मस्थानं विनिर्ममे ।
मन्त्रिणे नोनकायासौ धनोत्पादविधिंऽप्यदात् । क्रौर्य्यवशो न पादायं जनरक्षणदक्षिणः ।
मन्त्रिणो राजकलशापत्यान्यत्यन्तरङ्गतां । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ।
सुताः स्वाच्छन्द्यविस्रब्धैरा सन्ध्यादिसंश्रयाः । युक्त्या निदधिरे राज्ञा निवद्धस्वाधिकारिणः ।
पुनर्मदनपालेन कान्ते राजपुरीपतौ । साहायकाय व्यसृजत्सैन्यं वपटं नृपः ।
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि निर्ज्जितः । बद्धो मदनपालोऽपि कश्मीरान् सम्प्रवेशितः ।
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतोद्वाराधिपो वीरो विदधे डामरक्षयं ।
बभूव जिन्दुराजस्य क्षिप्रितो नयविक्रमौ । भूयनन्तरसामन्तमुकुटस्पृष्टशासनः ।
स राजपुर्ध्यादिजयी द्वारं परमकोपनः । क्षणे क्षणेऽस्यज्ञाज्ञा प्रसाद्य याचितः स्वयं ।
मदनः क्षितिपालेन प्रार्थितः कम्पनेशतां । लब्धप्रकर्षान्योपादीन् डामरान्सङ्ख्योऽवधीत् ।
सेवावशीकृतः क्षेमपालं स नगराधिपं । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचं ।
कन्दर्पोदयसिंहाभ्यां प्रहिते लोहरे कृतम् । राजा भुवनराजस्य दूरं निस्सारणं व्यधात् ।

कीर्त्तिराजस्य तनयां स च नीलपुरप्रभोः । लब्ध्वा भुवनमत्याख्यां रिपोश्चिक्षामथाऽभवत् ।
कार्य्यप्रतिग्रहे कर्म्मप्रवृत्तिं याचितोऽभवत् । तथा विजयसिंहाख्यो नृपेण नगरेशतां ।
तुक्कात्मजः स सख्योऽथ तेन द्वारपतिः कृतः । राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत् । १८५
॥ युग्मं ॥ शौर्य्यं निष्परिवारस्य पार्थस्योत्तरगोग्रहे । उरसा सम्प्रवेशे वा द्रुतं सन्नस्य मानिनः ।
पञ्चाशैस्तुरगैर्यस्य कृत्स्नां तेनो व्यपाहरत् । राज्यं वाजिसहस्राङ्कमभयाख्यस्य भूभुजः ।
एवं वशीकृतभुवो भूपतेर्नयवेदिनः । समस्तराष्ट्रभूपालास्त्रिषष्ठेऽब्देऽविशन् पुरं ।
कीर्त्तिन्यर्थपुराधीशस्यान्वयोऽभूद्दासटः । तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः ।
राजा संग्रामपालाख्यः स च राजपुरीपतिः । उत्कर्षो लोहरोर्व्वीभृद्दोर्व्वीशो मुङ्गो नृपः । १९०
गाम्भीरसीहः कान्देशः काष्ठवाटधराधिपः । श्रीमानुत्तमराजोऽपि राजानमुपतस्थिरे ।
॥ तिलकं ॥ राजेन्नाकः प्रहृष्टोऽपि घने जनपदेऽभवत् । दुर्लक्ष्यो वार्षिकसरित्पूरो वारिनिधाविव ।
तस्मिन् क्षणे क्षितीभूतविनताखिले नृपे । शीतकालेऽपि सङ्कोचं सुखं तैरन्वभूयत ।
सततापि हि भूपाला यस्मै किञ्चिदचिन्तयन् । प्रासमेव पुरे पद्म वामनेन तदाहृतं ।
कौशलं सन्धिभङ्गस्य रराजेतरदुर्लभं । निमित्तं तदमात्यान्तो नित्यवन्द्यो व्यवाहयत् । १९५
पार्थिवेष्वप यातेषु सत्ते कार्य्यपराङ्मुखे । क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः ।
अभिमानधनो मन्त्री कृतार्थश्चिन्निजैर्धनैः । दुर्गं स स्थापिकं नाम युक्त्या दुर्ग्रहमग्रहीत् ।
स प्रविष्टोऽपि नगरं खिन्नः केनापि हेतुना । पार्थिवाभ्यर्थमानोऽपि कार्य्यं नैवाग्रहीत्तदा ।
तदा प्रशान्तकलशं नित्यं दूत्यं समाचरन् । तद्विश्वेऽभिमन्तासः संमृत्यभिमानिनां ।
निर्जीर्यातिभूयस्या भूतेन् सङ्गस्य प्रक्षिणः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत् । २००
सोऽर्थैः क्रीतप्रयोऽप्यासीन्न कन्दर्पः समः क्वचित् । किञ्चिदैर्वर्जितः सिंहः सत्यसिद्धक्रियां स्पृशेत् ।
ततः क्रमेण भूभर्त्रा भृत्यवर्गं कथञ्चन । राजस्थानाधिकारं स नगरे ग्राहितः पुनः ।
प्रतिमाजनतद्वारे विपक्षेऽथ कृपाकुलः । त्यक्त्वा तमप्यधीकारं त्रिपथाजाह्नवीमगात् ।
पटान्तकृतसंरोधस्तार्जयित्वा करं प्रभोः । कोपाद्देशान्तरं यान्तं मत्यात्तं स मन्युमान् ।
अत्यन्तखेदितोऽप्यासीदासीनस्यान्तिकं पुनः । दर्पं हर्तुं नृपस्यास्य सन्नद्धो ननु जीवितं । २०५
इत्थं पुरुषसिंहानां प्रौढदार्ढ्यं विशेषवान् । आरोहमवरोहस्य सन्तरङ्गः क्षमापतिः ।
उपाङ्गगीतव्यसनं नर्तकीसङ्गसादरः । देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितं ।
ततो जयवनोपान्ते निरन्तरमहाग्रहं । स्वनामाङ्कं पुरं कर्तुं प्रावर्त्तत विशाम्पतिः ।
मठाग्रहारप्रासादमहाट्टहृपरम्पराः । सतोयोपवनास्तत्र ययुः सिद्धिं सहस्रशः ।
क्षणान्तरे राजस्नुषैव सोत्कर्षपोषवः । गुणैर्बभौ प्रकाशत्वमन्यभूपालदर्शनैः । २१०
सोऽशेषदेशभाषासु सर्वभाषासु सत्कविः । कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि ।
लुब्धेन पिता सन्त्यक्ता जना नानादिगागताः । गुणवैरस्यकेन गृहीताः कृतचेतसः ।

आसंसारं जगत्यस्मिन् सर्व्वतः ख्यातकीर्त्तिना । जनकेनैव जन्यस्य प्रसिद्धिरुत्पाद्यते जनैः ।
पुत्त्रगीतांशुनेवार्चिं दिक्द्वीपख्यातकीर्त्तिना । भवता तु सुपुत्त्रेण माध्यामात्यविलोचनः ।
स त्वं गुणवतामग्र्यो निरर्गलयशाभवन् । असाधुसेव्यमध्वानं वद कस्मान्निषेवसे ।
पैतामहं निजस्वार्थं यत्र तुभ्यं समार्पयं । तत्र हेतुमनाकर्ण्य नासूयां कर्त्तुमर्हसि ।
जिह्मः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृपः । इति निर्द्धार्य हि मया क्रियते कोशरक्षणं ।
पुरप्रतिष्ठां निष्पाद्य क्षिप्त्वा राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेऽथ वा पुनः ।
तद्राज्यकोशयोः स्वामी बुभूषुर्न चिराद्भवान् । अतितात्पर्य्यतः कस्मादनार्य्योचितमीहसे ।
सम्भाव्यते त्वयि न तद्यत्समावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्य्यतां ।
विशुद्धये करोत्येष सकलस्याप्रतिश्रवं । कोपादिति चन्द्रराजा साभिप्रायं वचोऽभ्यधात् ।
अपलापवचोमात्रं निर्जीपुत्रस्य वेतुतां । अनप्रत्यायने सोऽभूद्यस्मात्स्वामिसमुत्सुकः ।
हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितं । वक्ष्याम्यप्रमुखे तत्त्वमित्युक्त्वा निर्ययौ बहिः ।
सामान्यप्रेरणादेषा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं भीतः सावशयं ययौ ।
दूतं सामानं वीक्ष्य पाणिभ्यां ताडयञ्छिरः । हा पुत्रेति वदन्नाशा तस्याक्रन्दमदापयत् ।
हतोऽस्मिन् स्वगिरास्मिति प्रोक्तवतः प्रभोः । निदेशादेहयित्येव तस्कुलदेश रक्षिणः ।
तीक्ष्णास्तु पिहितद्वाराः परिवार्य्य नृपात्मजं । ऊचुः सुपरुषां वाचमेवं निश्चितहत्यवः ।
अस्मात् घृणी प्रमादी च विरुद्धं वक्ष्म कारयन् । घातयित्वा दुराचारं जीवन् स्थातुमिच्छसि ।
रक्षिष्यति सुतं न त्वां न पिता रक्षितस्त्वया । ज्ञातेयं युवयोरस्मि वधमेव हताः पुनः ।
युष्मस्व मध्यगोऽस्माकं त्वां निहन्मोऽन्यथा वयं । एवं सर्व्वप्रकारं ते व्यक्तं नास्त्येव जीवितं ।
तां वार्त्तां भूपतेः श्रुत्वा व्याकुलस्यायतः स्थितः । हर्षात्मिकं दण्डकाख्यः प्रायान्निजमहत्तरः ।
तीक्ष्णैर्भञ्जतया दत्तप्रवेशः स नृपात्मजं । प्रसृत्योवाच मतिमानेत्र सर्व्वान् विमोहयन् ।
त्वय्यियापुत्र जीवित्वा कल्पान्यपूनतरानपि । कारणैरपि गन्तव्यं नियमाच्छ्रयतेर्ध्रुवं ।
तदेतस्मिन् समासन्ने मरणे व्यभिचारिणि । यदर्थं रक्ष्यते सत्वं समानः पाल्यतां त्वया ।
हतस्तुतख्यातयशा युवा सुवर्च्चिश्यो भवान् । तदाहवविलम्बेन कार्य्यं किमिव पश्यसि ।
एतेषु सुमहायेषु मयि चापिवरेऽधुना । विपक्षैर्निर्जयो वापि प्रतापिंस्तव शोभते ।
तृष्णिष्ठ तत्त्वकेशादियोजनं कारय द्रुतं । वीरपट्टं बधानापि स्वःस्त्रीपरिणयक्षमं ।
इत्युक्त्वा क्षुरकर्म्मार्थं राजपुत्रं समापितं । प्रावेशयत्पूज्यमानस्तीक्ष्णैराभ्यन्तरं गृहं ।
न्यस्ताभिधेनुर्ध्येण दत्तहस्तः क्षणात्स्वयं । पश्चात्प्रविश्य तद्वेश्म चक्रे सुनिहितार्गलं ।
ततः स राजस्यात्मीयं तमाराद्भवोचत । रक्षितो राजपुत्रोऽयं क्रियतां स्वोर्ज्जितं त्वया ।
भूतपदादिभवभोगधिभिर्व्विरोधिजातं मलैः प्रहरणप्रभवं तनुत्रैः ।
निर्व्वाप्यते प्रतिभयं पृथिवीपतीनां साध्वेषिकस्तु रभसाद्भुवि युक्तिहंत्रुः ।

तद्भक्तसुमुखं योधास्ततो राजसुतास्पदे । आरोढुमारब्धवर्म्मप्रवर्म्यादि सर्वविग्रहः ।
तोहणाद्दृढदारस्य दर्शितं तत्र नृपात्मजं । यावन्निर्गन्तुमिच्छन्ति घ्नन्तमाना युयुत्सवः ।
द्विषाः प्रसङ्गसाक्षिध्यात्ममपातं समाश्रिताः । तावद्विनिर्ययुर्व्वीरा निर्द्दोषा अभिमानिनः ।
ते निर्याताः सुय्यमतीगौरीशाश्रयिणो मठात् । यदाश्रियान्तिकं प्रापुस्तत्रो युधि विरोधिनः ।
रक्ष्यमाणोऽपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजधानिवतस्तेषु प्रथमं पद्मआभिधः ।
द्विजस्तिव्याभिधो वीरः पण्डितः शोभ्यमण्डितः । रामदेवश्च केशी च कर्णाटोऽरिभटैर्हतः ।
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केऽपि च स्वयं । लेभिरे बधबन्धादि पापाः कापुरुषोचितं ।
सितपक्ष्यां सहस्रस्य चतुष्षष्टे स वत्सरे । वैरं नीतौ पितापुत्रौ विप्लवः कारितो विटैः ।
हठत्यागासक्तिः प्रियसुवर्तिसम्प्रेरणवचः खलासङ्गः पूर्व्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्राता सममपरमाचाय कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ।
एवं स खलसङ्गत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः ।
राज्ञी भुवनमत्यस्मिन् बद्धे माध्यस्थ्यसंविदि । स्नापिता मानिनी कण्ठच्छेदं कृत्वा महावसुम् ।
रक्षिणो मल्लिणामाप्रांसस्य क्लिन्नस्य भूपतिः । प्राहिणोद्धुवि तान् भोगान् सुतस्नेहाद्दिने दिने ।
चक्रिकायामशक्तोऽयमिति सङ्क्षिप्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वाच वारितः ।
नोनको हर्षमुद्दिश्य सेनान्यैश्च महीभुजं । जीवितं लोचने वास्य हृर्थ्यतामित्यभाषत ।
नृपः स शीलवैकल्ये पश्यतुल्ये श्रियं त्यजन् । रिपोरिव तनूजस्य चकमे कतिचित्क्रियाः ।
तास्तु श्वशुरवाशव्यमवाप्य सुगलाभिधा । बभूव तुङ्गभूभर्त्तनप्तृभर्त्तृवधार्थिनी ।
समाक्य नोनकः सा च द्वौ सूदावन्यनामरे । रसं प्रदातुं हर्षस्य पापं प्रैरयतां ततः ।
अन्यसूदमुखाद्दातौं प्रयागस्तामवाप्तवान् । प्रभुं तद्दाप्यभीनाक्षपरिहारमकारयत् ।
तेनान्नेन परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निरीक्ष्याभून्निराशो निजजीविते ।
प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्व्वाणि भोज्यानि स्पृष्टैवोज्झोद्दिने दिने ।
प्रयागोपहृतेनाधीत्यरं वा स्वेन सर्व्वदा । भोज्येन येन केनापि कुर्व्वञ्जीवितधारणं ।
षण्मासाभोजनं श्रुत्वा राजा सूदैर्निवेदितं । ततः प्रयागमानीय तत्र पप्रच्छ कारणं ।
प्रयोजकौ च सूदौ च सोपलम्भ न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ।
अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ।
स सर्व्वेषु विरुद्धेषु यद्यत्तत्ताद्यवाहयत् । मेने तत्तद्दिने जन्म मेवेष्वाप्यापराङ्मुखः ।
अथान्तरे समुदभूत्कलशाख्यस्य संशयकः । अदृष्टपूर्व्वो भूभर्तुः सदाचारविपर्य्ययः ।
उत्पाद्य नागसामान्याख्यं पूर्वं नामसमं रविं । स रीतिप्रतिमाः स्वैरं विहारेभ्योऽप्यपाहरत् ।
धनानि निरपत्यानामाहर्त्तुं व्यवसायिना । न्यवार्यंतार्य्यमर्य्यादा कीर्त्याकान्तेन प्रभुणा ।
ततोऽभिशापसन्तापप्रयञ्चकेन मुसाभवत् । चतिषगोगजातेन धातुवैषम्येण सोऽर्दितः ।

कुम्भप्रतिष्ठामभ्यागं चिकीर्षोर्हरमन्दिरे। तस्यापतन्महाकालकुम्भनासापुटाद्दृक्।
आकस्मिकं दुर्निमित्तं तत्प्रतीकारमन्विदा। स मगाणपणाच्छान्तिं प्रहर्षि प्रत्युतायथौ।
अनुगुप्तानुबन्धेन तेन स्थापितसौष्ठवः। शनैः शय्याप्रवर्त्तितामन्तः सम्प्रत्यपद्यत।
यत्नं मतनैव्यमग्निमान्द्याद्युपद्रवैः। कलाशेषेण शशिना सदृशः साम्यमाययौ।
राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान् पराङ्मुखान्। ततोऽभिषेकसौन्दर्यमानिन्ये लोहराचलात्।
उच्चावचासिन सर्वं संविभक्तामसूर्पणा। परमोर्थाविधेयेन स प्रहृष्टान्तबन्धुजनः।
कृत्वा धनार्पणं कुर्यां देशादस्य प्रवासनं। इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः।
ते तु गोप्तृन्निवार्य्याद्याष्टकुरांश्चाहरान्स्त्रितान्। विन्यस्य रक्षिभावे तमुत्कर्षाय न्यवेदयन्।
स नाय्यमगुरुपार्श्वेन निष्कृष्टः क्षामविग्रहः। निवेशितस्ततःस्तम्भे बद्धा बान्धववर्जितः।
अथोज्झितमिषून् प्राणान्निःसामर्थ्योऽविदन्नृपः। मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः।
स आनन्देवनक्रोधं तापस्वामिविपाटनात्। इयेष मरणं कर्तुं मार्तण्डं प्राणसंक्षये।
समयश्च विजयश्चेश्वमतएवापवर्गदं। महीश्वरोऽपि प्रययौ तत्र चामवर्षदः।
अधीकारप्राप्त्या तृणमिव विदन्विश्वमखिलं निबोगो जानातिर्न्नमति महदामीरपि हृदम्।
मदस्पर्शी प्राणी सकृदुपदेशाधिगमतः करोति प्राणान्ते शिशुरिव च किं किं न विगुणं।
ताहृश्या कृपणप्रायमैव्यया क्लैव्यमन्विदा। गुरूपदेशाहङ्कारमस्य हास्यत्वमाययौ।
शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे। तलादेशान्निनो युग्मं भूमन्मतुं विनिर्ययौ।
स मेरोकूर्ध्वनिर्घोषैर्जनाक्रन्दं तिरोदधत्। सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना।
वासमेषे दिनेऽन्यस्मिन् प्राप्तस्य चरणान्तिके। मार्तण्डस्य स्वजीवाप्त्यै सौवर्णीं प्रतिमां व्यधात्।
सर्वैरगणितावस्य दिदृक्षोर्ज्येष्ठमात्मजं। जैनोल्लाभदीनागतिमस्य व्यथितस्याधिकाभवत्।
भट्टिर्हर्षकृतं गीतं गायकानां स गायतां। विहृतद्वारविवरः शृणोति स्म विनिःश्वसन्।
प्राणान्तमासमन्तं परिमद्भवमन्तो स्वप्नप्रसङ्गइव धावनवर्जिताशा।
प्राचुर्य्यदा स्वल्वतो मरणोद्भवाया मर्मव्यथां प्रथयते पृथिवीपतीनां।
प्रजाज्येष्ठं तनुजस्य संविभज्य कृतार्थतः। उत्कर्षं याचयन् निद्रां बहुनिद्रोऽभवत्ततः।
अव्यक्तं वदतो हर्ष इति वाचं पुनःपुनः। निद्रातुं शोणको भावं तस्यादर्शमढौकयत्।
स तन्निवार्य विहसन्दृष्टेः कम्पयन् शिरः। जपन्निममपि सार्धोऽब्दे बहुवागभवद्दिने।
आसन्नप्राणनिर्याणः संप्रयाप्य मन्त्रिणः। ततः स्वसैरवसुद्धैर्मार्तण्डायमनायत।
अर्धानेकादशपञ्चाशद्भुक्तवान् स मितेऽहनि। मार्गस्य पञ्चषष्ठेऽब्दे षष्ठ्यां निष्ठामयासदत्।
सप्त मम्मनिकामुख्या देव्यः परिणयाहताः। बप्पहङ्काऽपि जयमत्यभिधाना तमन्वगुः।
प्रसादविस्मया तस्य पुनः कन्याभिधानया। यक्ष्याहङ्कया कृतज्ञा क्षोणीतिरपविर्बिता।
सर्वावरोधप्राधान्यप्रदानं नाकारयदि। साक्षात्श्रीमान भर्तुस्तदनुयायिजनोद्भवा।

संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः । भेजे सख्यक्षुद्रग्रामतो दुःखाकरोति नः ।
भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरं । निनाय साम्भोगिनं धिक् नारीर्नीचचेतसः ।
उत्कर्षस्याभिषेकाय यथेष्वखिलमन्त्रिषु । चन्द्रेऽष्टमिकरोद्राज्ञः कृतज्ञो वामनः परं । ७३०
घोषोऽभिषेकतूर्य्याणामेकतोगीतमङ्गलः । साक्रन्दाः प्रेततूर्य्याणां नादोऽन्यत्र समुद्ययौ ।
जातः पद्मश्रियो देव्याः पुत्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे ।
यद्ददाद्धर्षदेवस्य पिता प्रत्यहवेतनं । प्रतिशुश्राव तस्मै स तदेवोत्कर्षभूपतिः ।
आश्वासाय च मध्यस्थान्दद्दौ सामन्तमन्त्रिणः । कथ्यात्मजस्य पक्षे च अपराजस्य वेतनं ।
अश्निच्छन्ति हृदयएव तरसा गत्यन्तरं योषितो योगक्षेमकथाश्रिताश्रितजना एवात्मजाः कुर्वते ।
अन्येषां प्रतथोऽत्रयामममये पचौ विचार्य्येदृशौ स्तोपुत्रादिहते कुकर्मभिरहो सक्लिश्यतेऽर्थं जडाः । ७३५
प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः । ननु हर्षाद्याकाङ्क्षि हृदयं नगरौकसां ।
तद्राज्यलाभदिवसो जनस्याभोगदूषितः । सत्यपि प्रत्यभात्येव सरोगार्त्तिरिवोत्सवः ।
हर्षदेवस्तु पितरि प्रयाते मर्तुमातुरे । नवषट्चतुःसङ्ख्ये स तस्मिन्नह्नि भुक्तवान् ।
साधर्म्यदृष्टमिवाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं सम्प्रार्थ्य कथञ्चित्तमभोजयन् ।
राज्यं दातुं निजे देशे चकुशस्य प्रतिश्रयं । राज्यहर्षं नाथसर्वस्वैकएवेति वादिनः । ७४०
एवं मिलितचित्तैस्तैर्व्विपत्तिं श्रुतवान् पितुः । कृतोपवासः सोऽन्येद्युः शुश्रावोत्कर्षमागतं ।
वार्थैः पित्रे प्रयच्छन्तं निर्व्वाय सलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताथ सः ।
तस्य स्नानचये राज्ञि सज्जे राज्याभिषेचने । घोषोऽभिषेकतूर्य्याणामुदभूज्जयध्वनिः ।
स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्योतेन जीमूतगर्ज्जामिव नृपश्रियं ।
ततः प्रभृत्युत्सुकता सुनिमित्तैरवर्द्धत । तस्यात्यासन्नराज्यस्य भर्त्त्यैरिव दिने दिने । ७४५
स भोजनं कारयितुं दूतान् भ्रात्रा विसर्ज्जितान् । देशान्निर्व्वासयत् सां राज्यात्तस्य बन्धनात् ।
भ्रातुरप्रत्ययस्थित्या विदध्यां कोशमस्त्विदं । मियेऽन्यथा निरशनैः सन्दिश्येति व्यसर्ज्जयत् ।
स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्ततः । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ।
नित्यञ्च श्वो विधास्येतदर्थमान इति ब्रुवन् । कालापहारं कुर्व्वाणः शङ्कां तस्योदपादयत् ।
विश्वासाय स्वताडकपाणिकृत्वा प्रयागकं । पार्श्वं विजयमल्लस्य सोऽथ गन्तुं व्यसर्जयत् । ७५०
तदेवोक्ता तमूचे स त्वां मुने दुःस्थितोऽग्रजः । कुमारे त्वयि राज्येऽस्मिन् शुश्याभो बन्धने वयं ।
सङ्क्रान्तदुःखः सञ्चिन्त्य चिरेणापि तमब्रवीत् । कार्य्यं कुर्य्यात्कथमिदं सक्लिश नीतिमान्नृपः ।
तथाप्यस्मिन् यथाशक्ति यतिष्ये सद्विमोक्षणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितं ।
तं पार्श्वं हर्षदेवस्य सन्दिश्येति व्यसर्जयत । उपायांश्चिन्तयन्नासीत्तस्य कार्य्यस्य सिद्धये ।
उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किञ्चिदारम्भं श्रवणायतनक्षमं । ७५५
समर्पिताधिकारोऽपि कन्दर्पादीन् स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स च न स्वयं ।

पाणौ दर्शयता चोक्ता विलम्बालम्बनं यतः। निवार्य्य ठक्कुरास्तस्मिन् चिप्रं न प्राहरंस्ततः।
॥ कुलकं॥ स तु प्रत्येकमाहूय नामग्रहणपूर्व्वकं। अजिग्रहत्तांस्ताम्बूलमण्डपावेशितान् पुरः।
अङ्कस्ते कृतसत्कारास्ताम्बूलग्रहणक्षणे। ह्रीताः करायाङ्कस्थानि प्रजिघांसूंश्च मानसान्।
धत्ते श्रियं सृजति कीर्त्तिमघं लुनीते मित्रत्वमानयति हन्त विरोधिनोऽपि। ७९०
यात्यध्वभिः प्रतिपदं सुमनोऽनुकूलैर्गौः कामधुक्किमिव नापहरत्यनर्थं।
राजपुत्त्रः स तानूचे किं ह्रीता इव तिष्ठथ। निर्दोषाः सर्व्वथा प्रेष्याः स्वाम्यादेशानुपालने।
विलम्बयतां तथाप्यत्र द्रष्टव्यं महदद्भुतं। यथोदेयत्यवस्थानामन्यथात्वं क्षणे क्षणे।
द्विपदीपिकयाद्दूरगतुरगादिभ्रमकृतो यथास्थां भिद्यन्ते दिवि किल तरवाम्बुदलवाः।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां क्षणानां मानात्वाज्ज्ञ हृदि विकारोर्म्मयश्रमाः।
क्षणानुवृत्तिं कुर्व्वाणास्तथ्यथाच स्थिता वयं। तथा सन्तु भवन्तोऽपि कार्य्यान्तरविदूरगाः।
अपि चैवंविधा एव विलम्बन्तो रसान्तरं। आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः। ७९५
ग्रीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं सन्निकृष्टप्रभातं।
जन्तोरेवं प्रसभविभवस्फारसम्पत्प्रधाराग्निष्कामन्ती वियदुपचितोपद्रवोद्रेकमेति।
प्राणत्यागेण शकुनं निश्चित्येति वदन्स्ततां। आचचक्षे शुभोदर्काः स्वोदन्तसदृशीः कथाः।
कालं क्षपमुपन्यस्तशुद्धिव्यक्तीभवद्रमां। तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथां।
तद्भञ्जने स्वरसायां वाक्यवार्त्तागवेषणे। व्यापृतत्वं गभीरस्य न तस्य समलक्ष्यत।
अत्रान्तरे तमुद्दिश्य मते जाते नवे नवे। राजश्रियश्च कान्यास्य सतयोऽभद्दूतागतं। ८००
उत्कर्षो भूमिपस्तस्य परित्यागं समन्यत। आदिदेशानुगांस्तांस्ताम्बूलिकांश्च प्रसाधने।
अभिज्ञानोर्म्मिकादानमधादेश तु नास्मरत। तेनाकिं तस्य दूतानामन्वतिष्ठन्न रक्षिणः।
स तान् वन्ध्याश्रमान्वीक्ष्य सत्वाभिज्ञानमंविदं। मत्वात्मजं राजपुत्रं शूराख्यं व्यसृजत्ततः।
अभिज्ञानं वितरतस्तत्करे तस्य सूनवः। दैवयोगात्क्षणे तस्मिन्नूर्म्मिकाव्यत्ययोऽभवत्।
यः पातार्थमुपार्ज्जितोऽन्यस्मिन्नसन्नेव सिन्धुप्रभुर्दृष्टं चैत्रधराधरः स्वस्मिन्नसः पातं वरेणाभ्भूत्।
दिव्या स्वैव गदा सुतायुधनृपं हत्वाबधीद्राहवे यत्नाणाथ विगण्यते विधिवशात्स्नेत्र नाशो भवेत्। ८०५
तथा चैकस्य विस्मृत्या व्यत्ययेन परस्य च। अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान्।
आभिजन्येन हर्षस्य ते क्षणादेव रक्षिणः। प्रपेदिरे छिन्नविलम्बमुत्कर्षाज्ञाविरोधिनः।
द्वारमाक्रान्तमुत्क्रोधो बधायायमुपागतः। इति निर्ध्याय ते शूरं हन्तुमैच्छन्नुदायुधाः।
उद्घाटितारिपुटा दृष्ट्वा तस्योर्म्मिकां करे। तेनैव साकं मत्यन्तो हर्षं समुपतस्थिरे।
पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छन् प्रार्थितस्ततः। अविश्वसन्नाजसूनुः क्षणमासीत् स्थिमयन्। ८१०
तस्मिन् क्षणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः। कुर्वन्निजयमसोऽभूदधिकोद्रिक्तपौरुषः।
तन्व्दग्धमुद्धतं राजधानीं जीवति तेऽनुजः। अभिधायेति ह्वद्धः कथंचित्पार्थिवानुगाः।

राज्यं प्रादाः किमन्यस्मै जितेत्युक्तः स दुर्जनैः। तस्मिन्पुत्रेऽभ्यधात्तस्य वधं प्रथमजन्मनः।
विजने मन्दिरे हन्यामिति सम्मन्त्र्य भूपतिः। यागं विधाय व्याजेन तेनागन्तुं निमन्त्रितः।
मन्त्रे श्रुतिप्लुते राज्ञः सोऽथास्कन्दविशङ्कितः। आदिदेश स्वसैन्यानां द्रुतं सन्नहनोद्यतं।
सन्नद्धे राजसैन्येऽथ द्रुतं निर्गत्य भूपतेः। द्वारा विजयमल्लेन मन्दुरास्थास्तुरङ्गमाः।
संहरंस्तुरगान्वीक्ष्य प्रहरन्नृपतेर्बलं। कुर्व्वन्नाहवे वीरो निर्गन्तुं तत्परे पुरात्। ८०५
आश्लिष्य पृष्ठं तिष्ठन्त्या जायया सहितो व्रजन्। स चकार तुरङ्गस्थः सङ्ग्राममतिमानुषं।
धारासारैः क्षणे तस्मिन्नकालजलदोज्झितैः। विपर्यस्तेव पृथिवी सर्व्वतः समलक्ष्यत।
आह्वानमारुतारब्धभूरिभेरीरवे रणे। आसारेण शरैश्चासीच्छाद्यमानो नृपात्मजः।
तं चीयमाणपृतनं यान्तं हन्तुं समुद्यताः। कर्म्माणि प्राकृतानीव न चण्डकसुता अङ्गः।
भग्नसेतुं पयोवेगैर्व्वितस्तासिन्धुसङ्गमं। सन्नाभिरन्ध्रोर्म्भामवतीर्य्य स वाजिनः। ८१०
सत्त्ववानकरोत्पत्न्या सज्जनं रिपुसङ्कटे। सिन्धुं प्रहृष्टामुत्तीर्य्य तुरङ्गोऽपि तमन्वगात्।
द्विषां दृग्गोचरायातः स तमारुह्य वाजिनं। दरद्देशोन्मुखो वीरः प्रायाच्छूरवर्त्मना।
कन्दर्पद्वारपतिना सर्व्वतो रुद्धपद्धतिः। गिरीनुल्लङ्घ्य चाविशद्गिरिगुप्तां दरत्पुरीं।
दरदाभ्यर्चितं तत्र श्रीविद्याधरदेहिना। केचित्स्वजाः परिजनाः शनकैस्तं प्रपेदिरे।
श्रुत्वा स्वीकार्य्यमाणञ्च संरब्धं डामरादिभिः। प्रांशुं हर्षक्ष्माभृदुपायांश्चकितोऽन्वहं। ८१५
तेषु बन्धेषु शीतन्तु सोऽतिवाह्य दरत्पुरे। डामरैः प्रहितालापार्थैवं धामामदाम्मदात्।
उत्तीर्य्य सङ्कटांस्तिष्ठन्मार्गान्तःपटमण्डपे। अकस्मादभवन्मानी हिमानीहतजीवितः।
यद्ग्रामाय संरम्भो धीरैर्व्विस्तार्य्यते महान्। कार्य्यं हिनस्ति तद्दैवमत्यल्पेनैव वस्तुना।

उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति।
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन।

द्वैराज्यशङ्कया कञ्चित्कालं सङ्कुचितस्ततः। भूयः प्रभवतो लग्नं राज्यं हर्षमहीभुजः। ८२०
राजशब्दस्तदा सेहे न कुत्राप्यधिरोपणं। अत्युदग्रतया तस्मिन्लघुत्वेनान्यराजसु।
स शोभादायिनीर्भङ्गीः प्रावर्तयत मण्डले। निर्म्मत्सरो नरपतिः पुष्पर्तुरिव कानने।
मुक्तकेशाननुष्णीषा निष्कलाभरणाः पुरा। सन्यस्यैकं महीपालमभवन्निह देहिनः।
धम्मिल्लग्रथनाद्यत्र मदनः कम्पनापतिः। जयानन्दोऽप्यमात्याग्र्यश्चिह्नाधीरकधारणात्।
अन्यभूत्पार्थिवक्रोधमविशेषेण मण्डले। तेन राज्ञोचितो वेषस्तत्र राज्ञा प्रवर्तितः। ८२५
॥ युग्मं ॥ स केषाञ्चिदमात्यानामाकल्पोल्लासशोभिनां। निर्मत्सरः स्वदासीभिरारचिकमकारयत्।
दाक्षिणात्याभवद्भङ्गिः प्रिया तस्य विलासिनः। कर्णाटानुगुणष्टङ्कस्ततस्तेन प्रवर्तितः।
लम्बालीदलाः स्थूलचन्दनन्याससुन्दराः। रेजुर्जनास्तदास्थाने श्यामदीर्घाविधिनवः।
स्वर्णकेतकपत्राङ्कजूटसंवर्जितस्रजः। चटुलाविलकाशिष्टविलोलतिलकाङ्कुराः।

अपाङ्गभागयोर्बद्धसन्धयोऽञ्जनरेखया । निर्यन्निष्कलेखाभवद्धेमोपवीतकाः ।
अधराम्बरपुच्छाग्रैर्लम्बैश्चुम्बितभूतलाः । प्रच्छादितार्धदोर्मूलकञ्चुकाच्छपयोधराः ।
कर्पूरोद्धूलनस्मेरा भ्रमन्त्यन्तरकञ्चुकाः । वधूराश्रितपुंवेषा व्यधात्कुन्तलदन्तुराः ।
॥ चतुर्भिः कुलकं ॥ अन्योपजीव्यतां प्रापुश्चार्थिनो मार्गणाः । विश्वाप्यायकतां मेघाः प्रययेनेव वारिधेः ।
प्रसादे त्यागिनस्तस्य राज्ञः कनकवर्षिणः । समस्ता गायकगणाः पार्थिवस्पर्धितां ययुः ।
विदग्धानामनिर्भृत्यपिण्डमात्रममण्डितान् । चकार युग्यतुरगच्छत्रादिप्रक्रियाभृतः ।
कर्णाटेभ्यो विनिर्यान्तं राज्ये कलशभूपतेः । विद्यापतिं यं कर्णाटचक्रे पर्माडिभूपतिः ।
प्रसर्पतः करटिभिः कर्णाटकटकान्तरे । राज्ञोऽपि ददृशे तुङ्गं यस्यैवातपवारणं ।
त्यागिनं हर्षदेवं स श्रुत्वा सुगतविद्यान्वितं । बिल्हणो वञ्चनां मेने विभूतिं तावतीमपि ।
सौवर्णासनमालाढ्या राजधान्यो धरापतेः । सुवर्णाट्टाभ्रंलिहस्तम्भा भेजिरे भुवनाद्भुताः ।
तदीये नन्दनवने द्रुमेभ्यो न बुधः स्थितिं । त्यागिना निर्जितास्तेन केवलं कल्पपादपाः ।
विविधाभिरगुल्मन्यासैर्विहङ्गमगजादिभिः । तेन व्याप्तदिगाभोगं चक्रे पद्माभिधं सरः ।
सोऽज्ञासीद्यावतीर्विद्यास्तासां नामापि लिखितं । वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ।
गीतमाकर्ण्यतेऽद्यापि तस्य वाग्गेयकारिणः । विपश्चिरपि पद्माक्षकुठाराद्याद्विस्तुभिः ।
स्वपतो दिनयामौ द्वौ सर्वकालं विलासिनः । हन्तस्थानस्य तस्यासीद्यामिनीषु प्रजागरः ।
तस्य दीपसहस्राङ्के स्थितस्यास्थानमण्डपे । विदग्धगोष्ठीगीतनृत्यप्रस्तावेन क्षपा ययुः ।
कथान्ते शुश्रुवे तत्र न पर्णचर्वजः परं । कान्ताधम्मिल्लशेफालीत्रुटिजन्मा च मर्मरः ।
वितानैः सपर्यादेव साभ्रिवन्नेव दीपकैः । रत्नदण्डैः समर्पेव सधूमेवाभिमण्डलैः ।
साप्सरा इव कान्ताभिः सनक्षत्रेव सत्रिभिः । सर्पिचक्रैश्च विबुधैः सगन्धर्वेव गायनैः ।
नित्यवहितवन्नतिधनदस्य यमस्य च । एकं विहरणारण्यं दानस्य च भयस्य च ।
सभास्थानं स्थितिस्तस्य राज्ञः शक्राधिकश्रियः । कस्य वाचस्पतेर्भाषा वक्तुं कार्त्स्न्येन शक्यते ।
॥ चतुर्भिः कुलकं ॥ रोकैव राजतैस्तासीद्व्यवहारस्तदा घनः । मण्डले त्रिगर्तोऽमुष्मिन्दीनारैस्ताम्रजैः पुनः ।
दण्डनायकतां प्राप्य सुस्सः सर्वोन्नतिं भजन् । तस्मिन् काले लब्धशोभास्त्रीवो मुखिपचः परं ।
निजाजयवने स्थ्यां मूलके विजयेश्वरे । ख्यातान्ति यस्य सुस्सलं निर्व्ययस्थितयो मठाः ।
क्षुधितव्याधितानाथदीनार्तातिनिवारणं । सुस्पष्टं प्राप पद्मस्य राज्यलक्ष्मीः कृतार्थतां ।
नन्दिक्षेत्रे व्ययीकृत्य प्रत्यब्दं सप्त वासरान् । चम्पकः सफलां चक्रे सर्वकालार्जितां श्रियं ।
कृष्णाजिनोभयमुखी मुख्यैर्दानैः समाभुजा । वरद्रीकृता विप्रा निःशेषार्तिं विच्छिदार्थिनां ।
राज्ञो वसन्तलेखाख्या शाश्वितं प्रियाकरोत् । मठाग्रहारान्नगरे पूर्वे च त्रिपुरेश्वरे ।
माहेश्वर्यमयौ कारयित्वा ज्वालेव सोमयो । उदारव्यवहारस्तु न तद्राज्ये प्रवर्तते ।
अथ मट्टद्विं समाप्तः प्रसकेनैवमस्त्रिणः । पूर्वामात्यविशेरोषान्मितनिमोहं प्रवर्तके ।

कुण्ठातोऽङ्घ्रियुगः शिखी षट्पदं स्पृशति धावन्नपि भानुः पादसहस्रभाक् प्रतिपदं सख्यावनेऽनूरुणा ।
वध्यन्ते बलिनोऽपि यल्लघुबलैः सामर्थ्यहीनैश्च यद्भ्राम्यन्ते परिपूर्णपौरुषमिदं दैवस्य लीलायितं ।
स सर्व्वशास्त्राधिगमप्रौढः परिदृढो श्रियां । यशोऽर्जितमतिश्चक्रे वैधेयैरपि मन्त्रिभिः ।
विपन्नस्य पितुर्वैरप्रतिकारविधित्सया । स राजधानीनामाङ्कमठादिभिरलोठयत् ।
त्यागी तत्कोशसम्भारं व्ययीकुर्व्वन्नितस्ततः । लुब्धस्य चाभिधानस्य पाप्मेन हृतिं व्यधात् ।
शृङ्गान्ते शृङ्गशोभानां ठेकितं मूढचेतसा । स्वर्णं चक्राधिकं दासा स्त्रीणां तेन शतत्रयं ।
याद्गौरस्याद्गौरस्य नाडीर्व्विन्यस्यतानिशं । मात्रशालं परं ज्ञात्वा जनंगमकुलाङ्गनाः ।
अत्रान्तरे पूर्य्यमाणां गूढं कोटपदातिभिः । पुनर्भुमराजोऽभूद्दरराज्यलुब्धधीः ।
मदार्पितपुरं प्राप्तः कन्दर्पद्वारनायकं । श्रुत्वा योद्धुं विनिर्यान्तं ययौ भूयोऽप्यदृश्यतां ।
तस्मिन्प्रसङ्गेऽपि नृपो लुण्ठराजपुरीपतिः । सङ्ग्रामपालः केनापि हेतुना विक्रियां ययौ ।
कन्दर्पे कोटभृत्यानां भिन्नानां सङ्गृहीयते । लुण्ठराजपुरीं राजा व्यसृजद्दण्डनायकं ।
स महद्भिः समं सैन्यैर्गच्छन्नाहरवर्त्मना । अधीरः कोटकच्छेषु सार्द्धं मासं व्यलम्बत ।
प्रत्यासन्नाच्छुचेर्मासात्प्रतापाच्च विरोधिनां । स्फुरतस्तस्य यात्रायां न सङ्कल्पोऽप्यराजत ।
अविश्वस्तभावेन भर्तुस्तिष्ठन्निरुद्यमः । ततो जगाम कन्दर्प एवोपालम्भमात्रतां ।
कृतप्रतिज्ञोऽनाहारतया राजपुरीजये । उपालम्भार्दितः सोऽथ निःसामग्र्योऽप्यथाचलत् ।
निराहारस्य वसतः कन्दर्पस्याद्रिगह्वरे । षष्ठेऽह्न्यभूद्राजपुरीयोजनेऽभ्यधिके स्थिता ।
अव्याहतः सोऽरिबलाद्विपक्षस्त्राणि पातयन् । कदलीपत्रवत्कृन्तन्वनं सिंह इवाविशत् ।
दण्डनायकसैन्येभ्यः परमेकस्तमन्वगात् । सेनानीः कुलराजाख्यो बुद्धराजकुलोद्भवः ।
तं वाल्यान्यां राजपुर्य्याहतः संस्थापितं द्विषः । निहत्य शूरकच्छत्राद्यं कन्दर्पं मेनिरे हतं ।
मध्याह्ने स तु कन्दर्पः स्वयं सम्प्राविशद्बली । राजधानीं राजपुर्य्याविंशविंशैः समं भटैः ।
द्विषां विंशतिसहस्राणि योधानामनिवर्त्तिनां । रुरोध राजपुर्य्येव तत्पदातिशतत्रयं ।
काश्मीरकाणां निहतं रणे तत्र शतद्वयं । चत्वारि तु शतान्युर्व्यां खशानामप्यशेरत ।
भग्ने रिपुबले दूरमसंख्येयैस्त्रिनाग्निभिः । संस्कुर्व्वद्भिर्हतान्नामीयशोऽस्त्योर्महासनः ।
तेनैवं स्वाम्युपालम्भवितालो रभसार्पितः । रणश्मशाने वीरेण शमितो मांसशोणितैः ।
यामसात्रावशेषेऽह्नि पुनरेत्याथ संहताः । द्विषः परिभवोत्तप्ताः कन्दर्पं योद्धुमाययुः ।
ततस्तानथ नाराचान्निचिक्षेप स संयुगे । लिप्तानौषधिलेपैर्यैः विद्धा यैः प्राक्समुन्दिशः ।
आग्नेयं वेद्यमावश्यमिति मूढा विशङ्किताः । ते दूरं प्रययुर्भीता निन्दन्तः पुनरागमं ।
प्रगल्भभावः प्रतिभानमोजः प्रयोगचातुर्य्यमसम्भ्रमश्च । महाभयानामतिसङ्कटेषु धैर्योपसङ्गान्न धियं जहाति ।
राजधानीं प्रविष्टस्य मानार्हस्याभिलाषिणि । भूयोऽप्युपश्यस्य व्रज्यां वाच्यालीं वल्गैर्बलैः ।
योद्धुं यियासुः शुश्राव प्राप्तं तं दण्डनायकं । घोरां रणाटवीं दृष्ट्वा भयात्स्वगतसैनिकं ।

स्वीयैर्दृष्टैः शनैः कैश्चिद्दृष्यन्त्यधिकमाहवे । परकीयैस्तु बध्यन्ते कोऽन्तरं वेत्ति देहिनां ॥ ९९०
आसीनोऽथ विनिर्गत्य तेनैव समये व्रजन् । स्पर्द्धमानो यथाम्भोधौ मज्जन् हंसेन वायसः ॥
रक्तप्रजव्यीतसैन्यमभिन्नं बकुकोऽभवत् । परराष्ट्रं विभेदैवं स्वशौर्येणैव कोऽपरः ।
प्रणतात्करमादाय ततो राजपुरीपतेः । मासमात्रेण कन्दर्पः पुनः स भुवमाययौ ।
प्रत्युद्गमादिसत्कारैः कृतपूजो महीभुजा । स दण्डनायकादीनां शिरःशूलायितोऽभवत् ।
परिहासपुरे पारिपाट्यं कुर्वन् कठोरधीः । वातगण्डाख्यया ख्यातिं निन्ये यस्तत्र पर्षदा ॥ ९९५
प्रभूतोत्कोचसम्प्रीतसचिवप्रेरणस्पृशा । अपास्य वासनं राज्ञा पादाग्रादौ नियोजितः ।
आनन्दः स क्षणे तस्मिन्नक्षद्वाराधिकारितां । कन्दर्पद्वेषिणामाशीर्मन्त्रिणामनिमन्त्रितः ।
तत्प्रेरितस्ततः पातुं लहरं विभुताश्रितं । मण्डलेश्वरतां दत्त्वा कन्दर्पं प्राहिणोन्नृपः ।
सत्त्वविक्रमसम्पन्नः कुभृत्यैः स्वोदरम्भरिभिः । युक्त्या तथा राजपार्श्वात् समीपात्सोऽतिवाहितः ।
दृत्याशेषमिति प्रहाय निकटाद्देशान्तरं वाग्मिनं सूरिं बन्धुवियोगकृत्तमतयोऽमुञ्चेति सम्यज्य च ।
शूरं राज्यमसौ हरेदिति तथा हित्वा विचारेऽक्षितो धूर्त्तप्रेरणया बुधो नृपपशुर्यायाति नाशश्चिरात् । १०००
अदर्शनात्तु सद्यापि कन्दर्पप्रीतिराश्रयात् । राज्ञो जगाम कालेन सा मुष्टेरिव वालुका ।
उत्कर्षपुष्पावादाय चिकीर्षुर्लोहरेश्वरतां । कन्दर्पो वर्तते इति क्षितिपं मन्त्रिणोऽवदन् ।
तथेति नृपतिर्यक्तेन मन्युं हन्तुमथाशु तं । ससैन्य व्यसृजत्पट्टं टक्कं चासिधराभिधं ।
तयोः सम्प्राप्तयोर्ज्ञात्वा तां लेख्यव्यत्ययाद्भिदम् । विमुखशङ्कितात्मा च कन्दर्पोऽभूद्यथा मुहुः ।
कलियूतक्षणे हस्तं स्पृष्टसेवकवत्पुरः । आसीदसिधरस्तस्य बन्धुमभ्युद्यतस्तदा । १००५
ततः पाणिं विनिष्कृत्य सोऽङ्गुष्ठाग्रेण तत्करं । असृद्दारेण निस्ताड्य क्षिप्तः पत्रीव सोऽगमत् ।
अनन्तराजो भूभृच्च नैनात्मा च नृपाश्रितः । विगणय्य स खिन्नेन पट्टं स्वैरमकथ्यत ।
मैयाश्रयो नरपतिः कुटुम्बं प्रहिणोतु मे । अर्पयित्वा ततः कोटं प्रयास्यामि दिगन्तरं ।
आनीय दत्तांस्तोत्रीनादाय द्रोहवर्जितः । स विमुक्ताधिकारोऽथ मनस्वी वाराणसीं ययौ ।
कृत्वा गयायां मासमन्नमेकमन्यं निवेश्य च । काश्मीरकाणां चक्रे स शाकुण्डान्निवारणं । १०१०
स हत्वा चौरसेनान्यं ससैन्ये दुर्गमेऽध्वनि । पूर्वाशामध्वनीनां स व्यधान्निर्धूतकण्टकं ।
स्थायं निवसतोऽयमन्यं वाराणस्यां निरस्यता । पूर्वा दिक् भूषिता तेन मठैः सुकृतकर्मठैः ।
ते तत्रिर्व्यासनादेव मध्यमध्याः कुमन्त्रिणः । अन्योन्यासूयया जघुरण्यकार्याणि भूभुजः ।
वैराचारोदितगुरुमदाः शूद्रकण्डूनिशान्ते दुर्व्यारेर्ष्याकलुषमतयो यत्र दुर्मन्त्रिमुख्याः ।
अन्योन्यं भवति गणितैर्ध्यासरैरेव कश्चिन्मध्यमस्थाणोरिव नरपतेस्तत्र सर्वाङ्गभङ्गः ।
अतिक्रामति कालेऽथ पार्थिवं हन्तुमुद्यमं । दुद्रुवुर्जातराज्येच्छसान्निध्यर्ष्णभटोऽभजत् । १०१५
द्रोहापवादभागेव भवेद्राज्यमिदं पुनः । मामेव वेश्यापुत्रत्वाद्नरेऽस्मिन्नुपेष्यति ।
इति सम्मन्त्र्य सुचिरं निरन्तुं पृथिवीभुजं । प्रेरितो जयराजोऽभूत्तेनाधरलचेतसा ।

॥ युग्मं ॥ विलावयामचान् भिक्षां तीक्ष्णं द्रोहाय भूपतेः। सावरोधवधूर्देवा विदधे मध्यपातिनीः।
क्रमाच्छिशुमुखे तस्मिन् कार्ये राजपुरीं नृपः। दूत्याय व्यसृजज्जातु वज्रमानेन धम्मटं।
सहसमङ्गलस्यष्टे सुदिनापेक्षया स्थितिं। तं सिद्धिभङ्गचकितो जयराजः समाययौ।
तमर्थं मण्डपे गूढं तयोर्मन्त्रायमाणयोः। प्रयागानुचरः कश्चिद्भित्तिव्यवहितोऽशृणोत्।
तदावेदिततद्वार्तात्प्रयागात्तत्कथां ततः। बुद्ध्वा निवर्त्तयामास धम्मटं गमनान्नृपः।
कुलक्षयभयान्निष्ठं तत्प्रतीकारमत्वरः। स्वमेव केवलं रक्षायोत्स चकितोऽन्वहं।
असिद्धिं जयराजस्तु दृष्ट्वा दूतैः स्वसम्मुखौ। श्मालडामरौ वीरौ नागपालाभिधौ व्यधात्।
स्वभृत्यैर्मदनिर्यातैर्धियामुक्तं निवेदितं। श्रुत्वा चपायं चिन्तिस्यद्दिक्षु चिक्षेप रक्षिणः।
व्याजाद्याश्वां वदन् यक्षः प्रातस्तान्यहिरेव तं। चतुष्कं पूजने धूर्तौ जयराजमुपानयत्।
राजोद्यानागले धाम्नि स्थितस्य स्नानमण्डपं। समासौ भ्रातृपुत्त्रेण धम्मटेन ततोऽविशत्।
रक्षिणोऽथ बहिर्न्यस्य प्रयागः पार्थिवाज्ञया। जयराजं बधानेति तीक्ष्णं धम्मटमभ्यधात्।
धम्मटे विस्मसन् शस्त्रं जयराजस्यजेद्भुवं। निर्देशेनामुना वेत्ति स्वमज्ञातश्च धम्मटः।
द्वयोरेकस्य वा युद्धे तयोर्मृत्यौ हितश्च नः। व्यक्तीकृतैक्ययोर्व्वापि बधो लोकेऽप्यगर्हितः।
इति निर्ध्यायतः शश्वद्विरोधेन वेधसः। प्रज्ञास्य प्रत्यभात्प्राज्ञो मन्त्रो युक्ततमस्तथा।
॥ तिलकं ॥ नाबुद्ध मां ध्रुवं राजा तान्वक्ष्यतीति विस्मयन्। जयराजमुपागत्य ततोधार्ष्ट्याद्वचोऽब्रवीत्।
अप्रसन्नस्त्वपि नृपो यच्चन्द्रोहोऽसि निश्चयात्। तत्त्वयाद्य विशुद्ध्यर्थमसिधेनुः समर्प्यतां।
दैवेन वा मोहितः स तद्विश्वासेन वाक्यजन्। आक्षिप्यमाणः शस्त्रास्त्रकोविदः शस्त्रमन्यत्रत्।
वैक्लव्यदर्शनात्सर्व्यस्ततः स परुषां गिरं। तत्कृपोत्सृष्टशास्यस्तं जगाद्भाक्तकात्मजः।
न त्वं निःसत्त्वकथ्याया जातः कलशभूभुजा। स्वामीजनयिता नूनं क्लीबो यः कश्चिदेव ते।
निष्ठायां धैर्य्यचर्याणां परिणाममजानता। तेनेत्युक्तः स शीतामुषिकस्तम्भोऽभवत्।
॥ युगलकं ॥ द्रोहोद्यन्तं प्रचक्रमानोधीरस्तन्मध्यपातिनं। यानमाक्रोशितोऽप्यूचे स्वमेव मतु धम्मटं।
विषण्णमस्त्रवीर्य्येण मोघीकृतविषाशनः। रज्ज्वा निपीड्य ग्रीवायं ततो निशि विपादितः।
जयकेन प्रतीहर्त्रा शिरश्छित्त्वोज्झितं ययौ। भट्टारमठ्ठलातोये तदपुंसत्वमोज्यतां।
तमेकसप्तते वर्षे हत्वा भाद्रपदे नृपः। बधं गभीरहृदयो धम्मटस्याप्यचिन्तयत्।
आदिदेशाथ तस्मिन्नै रहः शस्त्रभृतां वरं। शूरं कलशराजाख्यं ठक्कुरं लोठराश्रयं।
प्रहिणोति यदा दूतं प्रयागस्ते तदा त्वया। सम्पाद्यमेतदित्यूचे तं चापचितसत्क्रियं।
असिद्धिभीत्या स्वं दूतं स प्रहिण्वन् प्रयागकः। समक्ष क्रियतामेतदित्यूचे कुपितो नृपं।
रात्रिं मन्त्रीयमाणेऽथ पश्चात्तीधाप्यमन्त्रिणः। वामनः सार्धं दारे त्यक्तदेहोऽब्रवीद्वचः।
मन्नश्च मन्त्रिणश्चैते न यावन्निःसृता बहिः। तावत्क्रियेत चेदेतत्त्व भद्राणि दरिद्रति।
राजाज्ञया प्रयागेण ततो दूते विसर्ज्जिते। तीक्ष्णः कलशराजाख्यस्तनयाभ्यां सहाययौ।

अनियतस्पष्टचेष्टानां भवानामिव भूभुजां । अन्तःप्रवेशकुशलो यो वेताल इवाभवत् ।
नप्ता हलधरस्याथ विटो लोष्टधराभिधः । जगाद निर्जने जातु राजानं रञ्जनेच्छया ।
॥ युग्मं ॥ ह्रियतां यामवेमादि कलेशश्वरसंश्रयं । तत्प्रसादाच्छुभिः सेतुं वितस्तायां करोमि ते ।
आलेख्यं गगने लिखामि विसिनीं सूत्रैर्ग्रथाम्यम्बरं स्वप्नालोकितमानयामि कनकं बध्नामि वर्म त्विषैः ।
इत्याद्युक्तमपि स्फुटं जडमतिर्जानाति सत्यं नृपो धूर्त्तादृक् त्रपया न वक्ति सगतप्रौढिः परस्वग्रहे । १०८०
निषिषेध चिकीर्षान्तु प्रयागस्तामपि प्रभोः । सदुपस्थायिकोऽपथ्याभ्यर्थनामिव रोगिणः ।
अथ लोष्टधरो हास्यावसरे जातु भूपतिं । बद्धस्य मोक्षो देवस्य क्रियतामित्यभाषत ।
स्मित्वा किमेतदित्युक्तवन्तं तं स व्यजिज्ञपत् । तद्भुण्डपुरे भीमशाहिरण्यमभूत्पुरा ।
विरोधात्परिपत्यानां तत्कृते भीमकेशवः । राज्ये कलशदेवस्य बद्धद्वारोऽभवच्चिरं ।
तैः शाक्तरैर्विदधे यदाथ विहतारारिः । चौरापहृततद्द्रव्यकवचो ददृशे तदा । १०८५
भूयोऽपि चक्रे तद्भीत्या कोशमामयभागिति । ततः प्रभृत्यथ यावदद्बद्धद्वारारिः स्फुटं ।
आदीयतां तदीयस्तत्कोशश्चौरभयावहः । सोऽपि बन्धादिमुक्तोऽस्तु पुष्पदीपादिभोगभाक् ।
इति सम्प्रेरितस्तेन तथा चक्रे स भूपतिः । कोशस्तदा प्रपेदे च मणिस्वर्णादिनिर्भरं ।
अचिन्तयच्च यद्येदृग्वस्तु शून्यसुरास्पदे । कीदृक् तदापरेषु स्यादाढ्येषु सुरवेश्मसु ।
कृतप्रायः स तत्त्यैः पारिषद्यैस्ततो नृपः । निष्क्रयं कलभारोढिवारणेन प्रदापितः । १०९०
क्रमेण सेनानानाङ्ग्यव्ययव्यसनशालिनः । सुराकुहरणे कुढा धीःसम्भावनया तथा ।
पूर्व्वराजार्पितान् कोशांस्ततः स भुवनाद्भुतान् । सर्व्वगीर्व्वाणवेश्मभ्यो लुब्धबुद्धिरपाहरत् ।
हृतेषु कोशेष्वथेतु देवानां प्रतिमा अपि । चकारोदयराजाख्यं देवोत्पाटननायकं ।
वदनेषु सतस्राढैः शीर्णघ्राणाङ्घ्रिपाणिभिः । मूर्तिनाशाय देवानां शकृन्मूत्राण्यपातयत् ।
स्वर्णरूप्यादिघटिता गीर्व्वाणाकृतयोऽलुठन् । अश्वखिन्नमगण्डाश्च इव सावस्करेष्वपि । १०९५
विबुधप्रतिमाश्चकुराकृष्टा गुल्फदामभिः । थूत्कारकुसुमच्छन्ना रथ्याशृङ्गाटकादयः ।
ग्रामे पुरेऽथ नगरे प्रासादो न च कश्चन । हर्षराजतुरुष्केन न योनिष्प्रतिमीकृतः ।
तस्य देवावमृष्यौ द्वौ परमास्तां प्रभाविणौ । नगरे श्रीरणस्वामी मार्त्तण्डापत्तनेस्विव ।
द्वौ सत्ता प्रतिमामध्याद्बुद्धविम्बावरक्षतां । दानप्रसङ्गे तं जातु याचित्वा त्यागिनं नृपं ।
परिहासपुरे जन्म मेदिन्यां कनकाभिधः । गायनः कुशलश्रीश्च श्रमणो नगराश्रयः । ११००
अधिगतवतां लोके विद्याद्भुतामपि सम्पदं न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकाङ्क्षिणां ।
किमपि कमलावाप्त्यै पद्माकरोद्धृतिपातकं भजति कमला लीलावासा भवन्नपि हि द्विपः ।
पैतामहेन पित्र्येण तथा राज्यचिकीर्षया । लोहरादाचनार्थस्य कोशेनोत्कर्षभूपतिः ।
युक्तोऽपि पूर्व्वराजार्थं दिवौकोभ्यो जहार यः । रेचकद्दूमार्जनं हा धिक् सोऽपि वास्तव्यपीडया ।
॥ युग्मं ॥ तदाज्ञामाचमादाय वचिवेरय पापिभिः । ते ते नवनवायासनामाङ्का नायकाः कृताः । ११०५

कालानुवृत्तिपरतां धिग्विद्याजीवोपजीविनां । यच मन्त्री वयस्यः सन्महाचार्योऽपि गौरकः ।
सर्व्वदेवाटवयामसर्व्वस्वापचतिव्रतं । स्वीचकाराज्ञया भर्तुरर्थनायकतामपि ।
॥ युग्मं ॥ पार्षदः समरस्वामिदेवागारे च हेलकः । प्राप्तो विजयमल्लस्य यो राज्ञो देवतां ययौ ।
द्विगुणोत्पत्तिदानेन सोऽर्थनायकतां गतः । लब्धावकाशो राजाये क्रमेणासीन्महत्तमः ।
किमन्यच्चरता तेन सर्व्वार्थान् सर्व्वनायकैः । व्यधीयत धनावाप्त्यै पुरोधस्यापि नायकः । १११०
श्रीगर्भपदपर्य्यायचक्रजाग्रप्रभावतः । तदार्जितस्य कोशस्य सोऽनुरूपव्ययोऽभवत् ।

मृगीदृशां दुर्लभतां स्त्रियाणां स्वामान्विटानां कुवचःसहत्वं ।
वैतालिकानाञ्च विकत्थनत्वं कर्तुं क्षितीशाः क्षपयन्ति लक्ष्मीं ।
कोपप्रसादैर्दयिताजनस्य द्यूतादिवृत्त्यान्नगवेषणेन ।
भृत्यानुवृत्त्या मृगयाकथाभोगाद्यैर्विमूढानामिव याति कालः ।
विलासहासासनपानदानयानाद्यमाद्या स्वमतीः सतीर्व्वा ।
छायेव चेष्टाः क्षितिपालवर्गः परानुकारेण करोति सर्व्वाः ।
समानुवृत्तं पुरुषाधिराजा विटस्तवैः स्वस्य विचिन्त्य सत्यं ।
तृतीयमत्यभ्यधिकं भुजं वा मर्मेति मत्वा न विदन्ति मृत्युं । १११५
निजास्तु येषां प्रभवन्ति दारादिभिस्त्वमात्या नियताधिकाराः ।
भ्रमो भ्रमः स्वस्य यदत्र तेऽपि विदन्ति भूपाः प्रभविष्णुभावं ।
स्वादूषितं स्वादनयैव भुंक्ते यूत्कृत्य मुञ्चत्यपि यूत्कृतानि ।
विश्वामितस्नानमुपेत्यकस्मात्कुभूभृच्च वालस्य समानभावः ।

आद्यमित्यादि यत्किञ्चित्क्षितिपानां कटाक्षितं । ततश्च हर्षदेवस्य जाड्येन लघुतां ययौ ।
तुष्टः पटहवाद्येन च्यालाताखविदे ददौ । भीमनायकनाम्ने स करिणं करिणीसखं ।
त्यागिन्यत्वेन तस्यासीद्धायनः कनकोऽप्य सः । चम्पकावरजः खेदाद्धोनाभ्यासकृतोद्यमः । ११२०
प्रसादीकृतमस्मै च खेदच्छेदनमिच्छता । तेन कास्मनदीक्षारलक्षमवनचेतसा ।
कर्णाटभर्तुः पर्माण्डेः सुन्दरीं चन्द्रलाभिधां । आलेख्यलिखितां वीक्ष्य सोऽभूत्पुष्पायुधवशः ।
कुत्सजयन्ति मार्गे च हासे अकुमतोत्थिताः । सारमेयानिवासक्तं श्रोत्राग्र प्राकृताशयाः ।
सविटो द्वेषिणो वीतत्रपस्तस्मै सभान्तरे । प्रतिज्ञां चन्द्रलावाप्त्यै पर्माण्डेश्च विलोडने ।
कृता पश्चिमकर्पूरपरित्यागं प्रतिज्ञया । तस्य स्तुतिमिषादेवं अहसुः कविचारणाः । ११२५
भावावेषविशेषतः परिगतस्त्वन्दाक्षिणात्योऽध्वगो गन्धादप्यवधारितं यदुत ते कर्पूरकोलाहरे ।
पश्चाद्विदिशस्य हर्षनृपतेस्तत्कम्पणोपायसं नोचेत्तिष्ठतु नारिकेलकुहरं सम्प्राप्यमुक्तिश्रितः ।
चाकर्णाटवसुन्धराधवबधादाचन्द्रलालिङ्गनादाकल्याणपुरप्रवेशनविधेरापिष्टलादर्शनात् ।

आराजाश्रयकाननाख्यवसुधापारङ्गिकोद्धलाद्वेन प्रतिपित्सुमिद्धमदना पोतामसद्युवर्णं।
विटः प्रसादनृपतिर्मदनः कम्पनापतिः। मदनस्तरत्नं जयाद्‌ तस्याखिलार्पिताङ्गनेः।
वस्त्रालङ्कारनिर्वाहहृते ऽमुष्यास्य वेतनम्। नित्यमादत्त भूपालादायमीर्ष्याक्रमाय च।
विटत्वे निस्त्रपत्वे च मदनस्य कथाक्रमः। भौजङ्गे पारिप्लवत्वे च नृपस्य निकषोऽभवत्।
मातेयं विद्धि कम्पाकाम्तवामीतेति वादिभिः। सन्दृश्य जरतीं नारीं मुषितः सोऽपरैर्विटैः।
दासीश्च देवता एता इत्युक्तान्यैः प्रवेशिताः। उपनिष्य प्रियं चौऽन्तःप्रणमन् जवसे जनैः।
दास्यो मदनसंलापसन्धायुलेखकारिभिः। अध्यापिता विटैस्तस्य मतिमोहं प्रचक्रिरे।
ताभ्यः काभिरपि स्नात्वसुरतं समयोचितं। वाञ्छन्तीभिः कृतः स्वाङ्गस्पर्शोद्धाराद्याश्रयोऽज्झितः।
आयुष्कामाय भूयांसं कालं जीवितकाङ्क्षिणे। आयुर्वर्षशतान्यस्मै ता मूढमतये ददुः।
डोम्बेन पिण्डसिद्ध्यर्थी केनाप्येतद्रसायनं। पिण्डसिद्धिकृदित्युक्त्वा पेयं किमपि पायितः।
किं तस्य कथितैरन्यैर्नानाव्यैर्यो याचितो विटैः। विधनानादिव धनादायुषोऽपि व्ययं व्यधात्।
बलरूपेक्षुरपरानुपायान् याचमेवत। कथयेत्कः सदाचारस्तामतोऽपि चपावहान्।
स एवमन्धतामिस्रे निक्षिप्तः प्रायशीः समाः। मुग्धबुद्धिः खजन्येन दुर्जातश्च कुमन्त्रिभिः।
मेघवाहनमुख्यानां कृत्ये लोकोत्तरे यथा। सत्यस्वाप्यधियः केचिन्मन्देहान्दोलिताशयाः।
तथास्मिन्नपि दुष्कृत्ये वर्ण्यमानेऽद्भुतावहे। भविष्यतीव कालेन नूनमप्रत्ययो जनः।
राज्ये बङ्कच्छले तादृक् दुर्नीत्योपहतोऽप्यभूत्। आयुःक्षेण न वंशे स रक्षान्वेषिणां द्विषां।
नर्तकीः शिक्षयन्नाचवृत्याययाभिनयं स्वयं। निष्कन्दोपेक्ष्यते धाम्नि दूरात्कनापि प्रभुणा।
चिरेष्वपि नाभूर्याक्षिहतो जनितोऽथ वा। फलं तस्यायुःश्लेषस्य प्रजानां कुशलस्य वा।
कश्चिदेवाय शुद्धान्ते पानदूतो महीपतेः। सर्वशुद्धिनिधेः प्राभूज्जारोचारिचविभ्रमः।
ते युवानो मदोन्मत्तास्ताः स्त्रियो यौवनोन्मदाः। साशाय सर्वदेवस्य तस्मिन्नेवाभवन् स्नो।
निग्रहीतात्मेन येषाम राजा काञ्चन स्त्रियः। काश्चित्काश्च शुद्धान्ताज्जारैर्नीता दिगन्तरम्।
खेन दौःशील्यदोषेण सर्वैरेव विशङ्किताः। भृत्यास्तस्याशुभान्वेषकत्वयतन्त च प्राप्तये।
तस्यापि शीलकैवल्यं तावत्सर्वत्र पप्रथे। यावत्कलशभूपालात्मजातस्योपपद्यते।
शैशवे वर्धितो याभिरङ्गमारुह्य मातृभिः। सोऽङ्कमारोप्य तास्त्व चुम्बनसंभुञ्जेऽनिशम्।
सम्भोगमागिनीवर्गं कुर्वता दूवेषो वृथा। निग्रहीता च भुक्ता च नागा पुत्री पितृष्वसुः।
स तुष्क्कजताधीशाननिशं पोषयन् धनैः। निधनावधि दुर्बुद्धिर्बुभुजे पाम्पशूकरान्।
अथ सेवाभिसारेण कदापि कुपितो नृपः। स मन्दबुद्धिर्गास्कन्दमदाद्राजपुरीं प्रति।
विलोक्य सैन्यसामिष्टीनमन्वयदुर्गीं पथि। चैत्रोक्त्याकान्तिसामर्थ्यं पार्थिवैस्तस्य शङ्कितं।
स तु पृथ्वीं गिरिं दुर्गं दृष्ट्वा सङ्कटपोद्यतः। अप्रविष्टो राजपुरीं तन्मूले समुपाविशत्।
मासमभ्यधिकं तेन तत्क्षुधा परिपीडिताः। प्रक्षीणान्नादिसंभारा बभूवुर्दुर्गरक्षिणः।

तत्पुत्रौ देवविप्रोक्तौ राज्यप्राप्तौ तदिच्छया । मानं व्यर्धयतां तौ वीरावुच्छलसुस्सलौ । ११८५
अत्युद्दामतयोर्ज्यायान् दिवसानपि नृपात्मजं । वार्षीड्राव्यर्थमाहात्म्याद्वाराद्वाराच्च निर्गतः ।
अवधत्वे भूपालप्रतापेन च शोषिताः । यथाकथञ्चित्सङ्गे रणदुर्दान्ता भटाः ।
अथाक्षेव विधेर्दर्पप्रतापपरिपन्थिनी । पपात सहसा दृष्टिरकौशलजलश्लथा ।
दुर्गध्वजं छिन्नैः हस्तं दुर्भेदैः पर्य्यवार्यत । अनुकूलेन विधिना यथाचैर्निश्चितैरिव ।
उत्थाने पातयन् कांश्चित्पतने कांश्चिदुत्क्षिपन् । वेधाः कन्दुकवत्येव कन्दुकक्रीडितभ्रमं । ११९०
ततः स्थला व्यहान् वृष्टिदुःस्थाश्च दुष्टमन्त्रिणः । चक्रिरे पूर्ववद्भाग्नः स्कन्धावारे विसञ्चये ।
ऊर्ध्वस्रोतोनुसारीव तिमिः प्रैक्षहतानन्ः । ततोऽपि चक्रे व्याहर्तिं राजा जयपराङ्मुखः ।
मुक्तापणः शीर्णकोशः त्यक्तश्रीकश्चुनायुधः । कटकः सर्व्व एवाभूत्पलायनपरायणः ।
धावतः पथिभिस्तैस्तैस्त्राक्रन्दावाजधेनिकाम् । पृष्ठव्यरिपून्दोर्भ्यां मार्गेऽप्यविघ्नतापगा ।
दोर्भिः ससंसमालेव साजपण्डेव खेटकैः । सशैवलेव खङ्गौघैः सग्रिलेव तुरङ्गमैः । ११९५
सौवर्णैः सरयाञ्चैव राजतैर्भाजनैरपि । सफेनेव जनत्यक्तैरासीन्मधुमती सरित् ।
भीतानाञ्च हतानाञ्च दस्युभिः प्रसृतोदये । अभून्नदी हतानाञ्च सङ्ख्या काचिच्च देहिनां ।
अनाथवत्तथा भूतं सैन्यं त्रातुं क्षमोत्तमः । एकस्तु सानुजो मानी नाचलन्माखिलबलः ।
दरदलाम्बुधिर्धावन् स विश्वाक्रमणोद्यतः । ताभ्यां वेलागिरिभ्रातृभ्यामिव संस्थितोऽखिलः ।
तौ रचित्वा बलं प्राप्तौ प्रसिद्धिमतुलां गतौ । पतिम्वरेव राजश्रीर्भेजे सदैव तेजसा । १२००
ततः प्रभृति लोकस्य सर्व्वस्यासीदसौ मतिः । राज्यार्हौ मानिनावेतौ क्लीबोऽयं सतु भूपतिः ।
तथा कृत्वापि यद्राज्ञो दर्शनं परिजह्रतुः । तौ प्रीतिदायविमुखौ बबन्धाशां ततो जनः ।
अथ भ्रान्तरिपुत्रासोन्नगरं प्राविशन्नृपः । प्रतापस्तु द्विषः प्राचात्सुतराजतनूजयोः ।
तौ रामलक्ष्मणावेताविति सर्व्वस्तदाब्रवीत् । रावणप्रतिमे राज्ञि भाव्यर्थानुगुणं वचः ।
राजा तु गतलज्जश्च नित्यकृत्योपमं जडः । कर्तुं प्रारभताखिलः पुनर्मेखलपीडनं । १२०५
अप्यपकारमपि पार्श्वगतं निहन्ति भीरो न दूरमवमानमपास्यराति ।
या निर्दयत्युपलमग्निकमापतन्तं तत्त्यागिनं नतु निदूरगमुपदोषः ।
ततः प्रविष्टः सम्प्रीतः सेवया दत्तकम्पनं । मंदर्भ सोऽप्यगोत्वेर प्रेयसं तत्पराभवं ।
तद्रोषेण जिघांसुस्तमागोजयाद्य सोऽपरं । तस्य देवी विदग्धाज्ञा लेखोपाहनलक्षणं ।
प्राप्ता मद्रराज्यात्स्व व्याभुजा दत्तदैवतः । भीतो लक्ष्मीधरस्यागान्मन्दिरं सकलमन्त्रिणः ।
राजा प्रयाचमानोऽपि तस्कतोऽन्येन मन्त्रिणा । अर्चितं वोचितं सैन्यैस्तं च पुत्रमथानयत् । १२१०
कोपश्रितं नरपतेरकालकुसुमं तरोः । वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ।
ये हम्प्रकृतविपुलप्रणयाभिमाना निःशङ्कमीश्वरनिषेवणमाचरन्ति ।
सन्धानुपञ्जरभयाद्भुजगेन्द्रवक्त्रं प्रख्यापयन्तः इव ते प्रलयं प्रयान्ति ।

कर्णिजपकुले तावन्मदनप्रलयावधिः । प्रापः सूर्य्यमती देव्याः प्रसारितभुजोऽभवत् ।
विक्रमालोकनोत्कण्ठी निचिक्षेप क्षमापतिः । बद्धा कलशराजं तं लक्ष्मीधरनिवेशने ।
विहर्तुं तस्य बद्धस्य शिखापेक्षामिवाश्रयः । तेजोवधाय क्षविधमुद्याख्यं व्यसर्जयत् । १२२५
स तृष्या आक्रम्यमानं तं वीक्ष्य प्रज्वलितः क्रुधा । लब्धासिधेनुः कस्माचिन्मनस्वी सहसावधीत् ।
तद्भृत्यैरधमं कुड्यैर्निपत्य स विपादितः । दुर्बुद्धेस्तस्य भूभर्तुरेवं मत्या विपेदिरे ।
मण्डले राजदण्डेन हतेनेव परिक्षते । चारपातोपमान्यापि प्राक्रदुःखपरम्परा ।
अहारि काष्ठमस्याली यैः पार्थिवगृहादपि । असत्यहस्तेन अनुलस्कराखादृशा विशः ।
प्रवर्त्तमाने मर्त्ये क्रन्दितध्वनिनिर्भरः । निर्घोषः प्रेतवाद्यानां स व्यरंसीद्दिवानिशम् । १२३०
उदीयर्कार्त्तिमग्रामे वत्सरे पञ्चसप्तते । अकाण्डं सर्व्वभाण्डानां दुर्भिक्षमुदजृम्भत ।
दीनारणां धान्यखारिः प्राप्याभूत् सुभिक्षतः । दीनारेणाभवल्लभ्यं माहिकस्य पलद्वयं ।
ऊर्णापलस्य दीनारैः क्रयः षड्भिरजायत । लवणोपणहिंग्वादेरभिधाप्यास्त दुर्लभा ।
सर्वेष्वोऽभवन्नश्यमेकेकाक्कुलविपदैः । कम्पेनाथा गिरिप्रस्थैस्क्वचिदारुवनैरिव ।
रत्नप्रज्वलता राजधानी दूरात्म दृश्यते । ज्वालेति सर्वतोराजा द्रुमाणां छेदमादिशत् । १२३५
सप्रसूनफला वृक्षा भटहस्ता इव पातिताः । कुटुम्बैरिव लोकैस्तु रोचक पदे पदे ।
प्राणापहं महादण्डं तथास्मेऽपि जने नृपः । हलवक्ये ह्रद्रावे गण्डशैलमिवाक्षिपत् ।
निपीड्य लोकं कायस्थैर्महादण्डग्रहव्यथा । पुरग्रामादिषु क्वापि नाभून्मृदवशेषिता ।
अथोत्क्षणतां सम्प्रःप्राप्तिहस्तुं सर्व्वडामरान् । स दण्डस्टदिव कृष्यन्नादिचन्मण्डलेश्वरम् ।
पूर्व्वं मडवराज्याध्यां लोहराब्धः स डामरान् । दत्तस्कन्दोऽवधीत्तांस्तान् कुलाये विहगानिव । १२४०
सता लवन्यानुखद्रूकृतमोचिकटाकृतिं । जीवन्मडवराज्यान्मोम विप्रोऽपि नोज्झितः ।
लावन्यबुद्ध्या प्रूनानि पार्थिरपाप रोपितैः । भीमरूपाभवद्भूमिर्भैरवस्य महाश्मसः ।
शूले लवन्यस्यैकस्य क्रूराम्निन्यस्तोऽवभूम् । ययुः सर्व्वे दिशो भीता लवन्यामण्डलेश्वरात् ।
केचिदभुञ्जिरे तेषां योमांसं श्वेकभूमिषु । खरघट्टखरद्वारादिहृष्टः केचिदवादयन् ।
प्राप्तिशात्प्राप्तं भूरि भैरवाय महीभुजे । लवन्यमुण्डमालालोरखण्डामण्डलेश्वरः । १२४५
तोरणावलयोराजद्वारेऽहृश्यन्त सर्व्वतः । डामराणां करोटीभिर्घटीभिरिव निर्भराः ।
द्वारि कङ्कणवस्त्रादि लभमानं नृपोक्तयः । नेता डामरमुण्डस्य यः कोऽपि स किलावदत् ।
भोक्तुं डामरमुण्डानि व्याप्ता विशीर्णतोरणाः । विदधुर्ध्वंक्षुकङ्काद्या राजद्वारोपसेवनं ।
यत्र यत्रासभूपालास्तत्र तत्र व्यधुर्जनाः । लवन्यमुण्डैर्खण्डैर्भिस्तोर्णासारकखजः ।
गन्धेनाप्रपुषिता घ्राणं कर्णौ भीमैः शिवारुतैः । चक्षिवन प्रवाकीर्णे मन्नामदव मण्डले । १२५०
कलेरकप्रपाप्राप्ततालोकपुण्यावधि व्यधात् । एकमेतौ मण्डलेशो डामरैः शूलकीलितैः ।
एवं मडवराज्यं स हत्वा निर्म्मृष्टडामरम् । अथावक्रमराज्यार्वी कर्त्तुं तामेव पद्धतिम् ।

अवश्यं न भविष्याम इति निश्चित्य डामराः । चक्रिरे क्रमराज्यस्था लोलाहे सैन्यविग्रहं ।
तैः संवर्द्धितसङ्ग्रामैः कुर्वद्भिः कदनं महत् । आस्ते स्म तत्र सुचिरं निरुद्धो मण्डलेश्वरः ।
किमन्यद्राक्षसः कश्चित्पुण्यतीर्थविपूजितं । निहन्तुं मण्डलमिदं सर्वथाजादवातरत् ।
उल्लासो रात्रिषु दिने स्वापः क्रोधमुदग्रता । अवाङ्मुखत्वं कर्णेषु दर्शिते शोणिते रतिः ।
इत्यादयस्तस्य केचिद्धर्मा नक्तञ्चरोचिताः । तथापि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्तिताः ।
अत्रान्तरे मल्लसूनुः कनीयान् यौवनोन्मदः । लक्ष्मीधरस्य गेहिन्याश्चक्षुराह्लादकोऽभवत् ।
सा हि राजसुते तस्मिन्संसक्ता प्रातिवेश्मिके । नारज्यत निजे पत्यौ वानरप्रतिमाकृतौ ।
ज्ञातीनगण्यान्हत्वान्यानस्माद्राज्यार्हलक्षणौ । नावधीदुच्चलावेतौ राजसूनू ससुस्सलौ ।
इति लक्ष्मीधरेणेर्ष्यारोषादुक्तोऽपि भूपतिः । न च क्रोधानुतापार्तिं पूर्वज्ञातिवधाद्गतः ।
स्वयमन्यमुखेनापि स तेनोक्तस्ततोऽसकृत् । तेषां घाते तदौचित्यं ध्यात्वा साध्वसमादधे ।
ज्ञातिप्रीत्यनुवृत्त्यादि तेन विस्मरता ततः । मन्त्रयित्वा मन्त्रिभिः सार्धं दध्रे तद्वधनिश्चयः ।
आसन्नवारवनिता चक्रमाख्या तु तं व्यधात् । भूभर्तुर्दुरभिप्रायं तयोः कर्णपथातिथिं ।
सख्या दर्शनपालेन तत्रार्थे कृतसंश्रयौ । निरगातां निशीथिन्यां द्विवेलावसुगैः समं ।
षट्सप्ततेऽब्दे नगरान्मार्गशीर्षेऽथ निर्गतौ । तत्रामवसतेः प्राप्तौ डामरस्योपवेशनं ।
प्रशस्तराजो दृग्भुक्तः सिंहराजं निजानुजं । सोऽभिसन्धाय तौ निन्ये लवन्यो मण्डलान्तरं ।
ततो राजपुरीं ज्यायान् प्रायात्कलशस्य भूपतेः । कनीयान् प्रययौ पार्श्वं कलिञ्जरधरेशितुः ।
तयोर्निर्गतयो राज्यं न कश्चिच्छ्रद्दधीयत । निमित्तज्ञेन राज्ञैव दुर्निमित्तैरबुद्ध्यत ।
लक्ष्मीधरमुखैः प्रार्थनां हन्तुमुच्चलं । चक्रे सङ्ग्रामपालस्य सोऽङ्गीकृत्य धनं ततः ।
स त्वन्तिकागतस्यैवमसंलक्षितः कृतादरः । तथा विमृश्य यत्नात्वेदधिकगौरवः ।
आसन्नाभ्युदयं मन्ये दैवेनैव विधिचोदितः । शङ्काविष्करणाशोके नयोत्साहावसाभुवं ।
राजपुर्याः प्रकृत्यैव काश्मीरार्थकाङ्क्षिताः । प्रभविष्णौ रिपौ प्राप्ते चक्रिकायां किमुच्यतां ।
कांश्चिन्निकृतिकप्रायान् पार्श्वयातानथोच्चलः । गमागमान् कृतोद्योगो डामराणामकारयत् ।
डामरास्तु महोत्साहास्तमामन्त्र्य व्यसर्जयन् । राज्ञा विप्रकृता दूतान्वितीर्णोपायनान्वहन् ।
ते सूर्यवर्मचन्द्रस्य तनयो जनकाभिधः । चकारोपचितोत्साहं मन्त्र्यादृतैर्विमर्शितैः ।
वीक्ष्य डामरदूतांस्तान् अहता राज्यताभयं । व्यक्तं सङ्ग्रामपालेन निन्ये साहाय्यमुच्चलः ।
स कार्यगौरवात्प्रज्ञो मूर्ध्नि कर्पूरचूर्णकं । कृत्वा तमविनाशाय यावद्विन्यष्टुमैहत ।
तावत्कलशराजाख्यस्तद्देशे मुख्यठक्कुरः । हर्षदेवार्पितोत्कोचस्तमेत्य विजनेऽब्रवीत् ।
राज्ञः प्रसादनं त्यक्त्वा तवोच्चल हितैषिणः । कामधेनुं विनिर्धूय ज्ञागकण्डूयते खरः ।
कोऽयं काश्मीरभूपानां कार्ये प्रतिपक्षिणः । आराधनेन तद्राज्ञो विधेहि स्वमसाध्वसं ।
अयं राजगिरौ दुर्गे स्थापितो पार्थिवस्ततः । अव्यभीषितवर्धाव आशाप्रिततया सर्वदा ।

बद्ध्वा निःसङ्गमासीनं द्वारेशं सुज्जकाभिधं । कश्मीराणामिवाकाङ्क्षी क्षिप्रं क्षेमेण न्यवापतत् ।
तं डामराश्च कतिचित् स्वामिकार्य्याद्विसंश्रयाः । राजद्विषः प्राप्तमार्गं सर्व्वतः पर्य्यवारयन् ।
तमाकाशादिव स्रस्तं भुवोगर्भादिवोत्थितं । निरस्यातर्कितं प्राप्तं चकम्पे हर्षभूपतिः । १११५
माभूद्वैधो बहुमूलः क्रमराज्यान्तरस्थितिं । मावधीन्मण्डलेशश्च ध्यायन्नित्याकुलोऽथ सः ।
विलम्बमाने सन्नद्धसैनिके दण्डनायके । त्वरितं प्राहिणोत् पट्टं वितीर्णाखण्डनायकं ।
दैवोपहतवीर्य्यो वा कान्तो वा द्रोहचिन्तया । अभ्यमित्रीणतां त्यक्त्वा स तु मार्गे व्यलम्बत ।
अन्यांश्च यान्यांस्तिलकराजादीन् व्यसृजन्नृपः । ते ते पट्टं समासाद्य नाकुर्व्वन्नपनिर्गमं ।
दण्डनायकमुख्येऽपि लोके राज्ञा विसर्ज्जिते । याते विमूढतां प्राप बहुमूलस्समुच्चलः । ११२०
वराहमूलं प्रविश्यागतां द्विषताम्बलात् । अश्वां सुलक्षणोपेतां राजलक्ष्मीमिवासदत् ।
महावराहमौलिस्थकस्य मूर्ध्नि पपात च । तदंसस्थितया पुष्पस्रा वरणार्थमिवार्पिता ।
काकाद्यैर्वैश्यकुलजैर्योधैस्संरुद्धपद्धतिः । स हुष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ ।
अथान्तरे तमायान्तमाकर्ण्याभिक्रमागतैः । विद्रवोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः ।
तैर्हि प्रागेव भङ्गं स नीतो हत्वा महाभटान् । यशोराजमुखाञ्छूरान् ययौ मन्दप्रतापतां । ११२५
शनैरपसरन् सोऽथ तारमूलकमासदत् । उच्चलाधिष्ठितास्तेऽपि विद्विषस्तमन्वयुः ।
समेता ननु सैन्येन तेन तत्र चिरं धृतः । उच्चलप्रलयाभ्रस्य पौरस्त्यानिलविभ्रमः ।
सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते । बभूव तुमुलः सङ्घर्षस्सय्योरिव दन्तिनोः ।
आनन्दनामाप्युत्पिज्ञात्याममुच्चलमातुलः । चक्रे मडवराज्येऽथ निविडोत्कृतडामरः ।
तद्विप्लवे डामरौघा दिग्देशेभ्यः सहस्रशः । उन्नमन्नुर्हिमापाये रन्ध्रेभ्य इव पन्नगाः । ११३०
तत्क्षणं क्षीणभाग्यस्य यथा दारपतिस्तथा । कार्य्येषु कम्पने राज्ञः सहेलोऽभून्महत्तमः ।
आनन्देन कृतास्कन्दो सज्जो विजिताहवः । प्रोज्झीत् मडवराज्यं स नयनदक्षभृत्तदा ।
अथाद्भुतप्रतापेन वेष्टयित्वा महाचमूं । उच्चलेनाहवे बद्धस्ससैन्यो मण्डलेश्वरः ।
न विद्मः किं तदा दृष्टं योधानां यत्किलाविदन् । ते सखड्गाः समन्ताद्दा बद्धावयमिति स्फुटं ।
तथा बद्धोऽपि निर्द्दध्यौ न भव्यः प्रभवे हितम् । स्वामिभक्तिर्विपर्य्येति पर्य्यन्तेऽपि न मानिनां । ११३५
तूर्णं पुरप्रवेशाय सोऽथ प्रैरयदुच्चलं । विश्वास्य नेदृगन्योऽस्ति क्षण इत्यसकृद्ब्रुवन् ।
विश्रान्तस्तस्य चानेकैः पुरग्रामानलुण्ठयत् । कर्म्मणानेन कोशोऽस्यास्त्विति विचिन्तयन् ।
परिहासपुरे तेन सततः सम्प्रवेशितः । श्वभ्राम्बुविषमाद्यस्माच्छ्वभ्रगर्भोऽत्यन्तदुर्गमः ।
तत्रोच्चलं चतुःशाले सद्म दग्धुमचूचुदत् । निजान् स निशि ते तत्तु न चक्रुस्तद्धितैषिणः । ११४०
यथा चित्तं तथास्य स्यात्कायचेष्टाप्यसंयमः । तदात्मनिरपेक्षस्य किं न सिद्ध्येत्समीहितं ।
क्रीडन्नुच्चलवपुस्तथा सह वसत्यश्चेतसा कश्चनो निर्भयो रणकर्म्मसाहसमहोत्साहस्य सिंहः सदा ।
धिक् प्रादुष्कृतपक्षपातरभसो नीचेषु मुग्धोविधिर्व्वीराणां कुरुते शरीरमभितो वैकल्यसम्भारकं ।

सन्दिदेशाथ स क्ष्मापमालक्ष्यार्थं समागतः । शृगाल इव ते छिद्रः क्षिप्रं निर्गत्य बध्यतां ।
ततः समस्तसामन्तसैन्यसन्ततिसंयुतः । श्वो मृत्युर्जयो वेति निश्चित्य निरगान्नृपः ।
स प्राणसंशये सर्वायासप्रशममादिशत् । पटहोद्घोषणेनामोत्सवैरनुगतोऽखिलैः ।
प्राप्तं भरतसेत्वग्रं प्रस्तः सैन्यं विरोधिनं । आजानेयराजभृत्याः क्षणान्मार्गमलङ्घयन् ।
दुर्भिनेऽथाविवायाते राजसैन्ये द्विषद्बलं । मण्डलेश्वरएयान्तः प्रविष्टो निरनाशयत् ।
अथोत्सलबले भग्ने विदुद्रुः केऽपि आह्निकाः । आन्ता राजविहारस्य प्राविशन् केऽपि डामराः ।
त्रिलोमेनाभिधं दृष्ट्वा प्रविष्टं डामरं परे । उत्पलोऽसाविति भ्रान्त्या विहारं तमदाहयन् ।
सोमपालाभिधेनारिहयारोहान्तरे चिरं । कुर्वन्दर्शनपालस्य पितृव्येन सहाहवं ।
यशोरक्षनकचन्द्राद्यैर्मानी व्यावर्तितो रणात् । परिहासपुरप्रायान्मृत्युवक्त्रादिवोत्पलः ।
त्रिसन्ध्यां गौरिकावालधामात्तीर्णो हयान्वितः । स डामरैः सह पुनः प्रययौ तारमूलकं ।
जयेन तावन्मात्रेण कितवोऽल्पदवोत्कटः । राजा प्रशमल्लानन्दं राजधानीं न्यवर्तत ।
जीवन्तमप्यरिं श्रुत्वा स पश्चादलगन्न यत् । आमनुच्छलितास्तेन भङ्गभाजोऽपि डामराः ।
यातान् पलाय्य तान् ज्येष्ठामूलीये मासि सर्वतः । भूयोऽपि सङ्घटयितुं स्थिरधीरेकदुत्पलः ।
खेदार्थाश्वसहायस्य परायत्तस्य मानिनः । दुर्भिक्षान्नर्महायोगः स तस्य विषमोऽभवत् ।
तन्मध्येऽतिदरिद्रोऽपि सम्प्राप्तं स रत्न यत् । तमुत्पाट्यामयद्राजा श्रीवरोहासहोत्रं ।
तस्मिन्निर्घटिते पांसुः कपोतच्छदधूसरः । रोदसीच्छादनं हर्षोर्ध्वच्छेदावधि व्यधात् ।
प्रागन्धकारदेशेऽस्मिन्दिवसेऽपि व्यजृम्भत । रूपिकादिवसालोक इति यत्प्रथते जने ।
निर्वापिते परीहासकेशवे प्रशशाम तत् । तस्मिन्नुन्मूलिते भूयः सार्धं मासमजृम्भत ।
किञ्चिदुच्छलिते राज्ञि मन्दोद्रेकतया रिपोः । दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत ।
अवनाहे सहि वसन्तपालस्य परैः पितुः । सन्दूर्णः संयतोऽज्येष्ठसौदासीन्यादपावनः ।
दस्यान् कम्पनिनीशेन काश्चिदादाय वाजिनः । चिरेण राजदाक्षिण्यसौजन्येन व्यलम्भत ।
आरम्भादुदयात्तस्य तिष्ठन्वैरेऽपि निष्ठुरे । साम प्रयुयुजे मोहावहमायानिधी रिपोः ।
जित्वा माणिक्यनामानं तेन सेनापतिं रणे । प्रापि शूरपुराद्ग्रामाज्जयश्रीः श्रीश्च भूयसी ।
तस्याभ्युदयपाकस्य तथा सम्प्राप्तया श्रिया । आरम्भिसमयः कृत्स्नः स विभूत्यद्भुतोऽभवत् ।
मण्डलेश्वरपट्टादीनविविच्छ्योल्लम्भतः । साहिणो नृपतिर्योद्धुं सुस्सलं क्षिप्रकारिणं ।
तेन शूरपुरे भग्नास्त्योधाः शौर्यशालिना । भूयांसः प्रलयम्प्रापुर्मग्ना वैतरणीजले ।
तत्र दर्शनपालस्य स्वामिद्रोहहतो वपुः । विक्रामतीव संस्पृष्टं खिन्नेव जयश्रिया ।
राजसैन्यं तदन्येद्युर्हतशेषं पलायितं । लोकपुण्ये निवसतः सहेलस्यान्तिकं ययौ ।
सुस्सलापातकल्पान्तं विशंक्यापि सहेलकः । तैस्तैर्भग्नैर्बलैः सार्धं नगरं प्राविशत्ततः ।
एवमभ्यागते नृपतौ । सुस्सलेन विलम्बिते । अवाप तारमूलस्थः प्रतिष्ठां पुनरुत्पलः ।